॥ श्री ॥

काशी संस्कृत ग्रन्थमाला
२०५

श्रीमन्नरपतिकविनिरचितः

# नरपतिजयचर्यास्वरोदयः

'सुबोधिनी' संस्कृत-हिन्दीव्याख्योपेतः

व्याख्याकार
पं० गणेशदत्तपाठकः ज्यौतिषाचार्यः
काशीस्थ जो० म० गोयनकासंस्कृतमहाविद्यालयज्यौतिषप्रधानाध्यापक



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१
१९७१

THE
KASHI SANSKRIT SERIES
205

# NARAPATIJAYACARYĀSVARODAYA

OF

ŚRĪ NARAPATIKAVI

*Edited with*

*The Subodhinī Sanskrit Hindi Commentaries*

BY

PANDIT GAṆEŚADATTA PĀTHAKA,
Jyotiṣācārya
*Professor J M Goyanakā Sanskrit College*
*Varanasi*

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1971

# प्रास्ताविकम्

भारतवर्षस्य अतीतगाथैवोत्कर्षस्यैकमैतिह्यं वर्तते। परं तु तस्याय विषयो यद्यस्यां भाषायां भारतवर्षीयगौरवगाथा विपुलतया विद्यमाना सन्ति तस्या भाषाया एव दिनानुदिनं विलोपः सम्पाद्यते। कालक्रमेण साम्प्रतमेतादृग्दुर्भाग्यमयः समयः समुपस्थितः यद्वयमस्याः संस्कृतभाषाया अध्ययनं सम्यक्तयाऽन्यासां भाषाणां साहाय्यं विना कर्तुं समर्था संजाताः। स्वगेहवस्तून्यप्यन्यसाहाय्यं विना परिज्ञातुमशक्ताः। अथ देशस्तेषां वैदेशिकविदुषां चिरकालं यावदृणी स्थास्यति, यैर्भारतवर्षस्य प्राचीनग्रन्थानामनुवादमीमांसाऽऽलोचनां लिखित्वा पिपासैका समुत्पादिता। परमियमपि ध्यानार्हा वार्ता यद्ये जना तेषामुपरि रागद्वेषभ्रमोत्पादकताया आरोपमारोपयन्ति तेऽपि अंशतो युक्तवादिन एव। संस्कृतभाषायाः पल्लवग्राहि पाण्डित्यमासाद्य भारतीयसभ्यतायाश्च ज्ञानलवदुर्विदग्धत्वमधिगत्य एकं नवां विजितप्रजाया इतिवृत्तलेखनसमये एव विधा त्रुटी कर्तुमर्हति, माननीयश्चाय विषयोऽपि।

इतः षण्णवतिकोट्यधिकैकाब्जमिता ( १९६०००००००० ) वर्षेभ्यः प्राग्ब्राह्मणकाले भारतीयसभ्यताया प्रायशः सर्वा वार्ता आदर्शतयाऽवस्थिताः आसन्। चतुर्वर्णसभायां राज्याभिषेकनियमानुसारं यावदेकोऽध्वर्युः ( ऋत्विक् ) योग्यपुरुषस्य राजत्वनिष्पत्तेर्घोषणां न कुर्यात्, यावच्च चतुर्वर्णप्रतिनिधयः तं स्वकीयं नृपं न स्वीकुर्युस्तावत्पुरुषः राजा भवितुं नार्हत्। राजा चक्रवर्ती भूत्वाऽपि राजनियमानुसारमेव शासनं कर्तुं समर्थ आसीत्। तस्य शासनकर्तृशक्तिरपि प्रतिबद्धा मन्यते स्म। तस्य सहायतासम्पादनार्थं विभिन्ना न्यायसभा भवन्ति स्म यासु काश्चित् शासनविधानस्योपरि, काश्चिदाध्यात्मिकोन्नतेरुपरि, काश्चिच्च वैज्ञानिकानुसन्धानस्योपरि विचारं सम्पादयन्ति स्म। सुप्रबन्धतया देशे ऐश्वर्यबाहुल्यमासीत्।

वाल्मीकीयरामायणस्यावलोकनेन ज्ञायते यत्तदा भारतीयसभ्यताया पताका अभ्रङ्कषाऽऽसीत्। अयोध्यानगरस्यैव विभूषा निर्मितिश्चैतादृशालौकिक्यौ स्त यदिद

न मे स्तेनो जनपदे न कदर्यो न मद्यप ।
नानाहिताग्निर्नाविद्वान् स्वैरी न स्वैरिणी कुत ? ॥

अयमाशयो यद्भारतीया स्वनैतिकवृत्तिविकासे जगति तस्योदाहारेऽप्रतिमा आसन् । ध्यानार्होऽय विषय यदस्मिन्नवयुगस्य विषाक्तवातावरणमध्येऽप्यवस्थितानामस्माक हृदये वैदिकसाहित्यपाठे पवित्रतोद्रेक सम्पद्यते तर्हि तदानीन्तनस्य का वार्ता ? यदा सरलान्तकरणेषु भारतीयमनुष्येषु आर्षग्रन्थाना प्रचलनपरिपाटी प्रपूरिताऽसीत् ।

इमास्तु जाता प्राचीनकालस्य वार्ता । चन्द्रगुप्तस्यापि काले यावद्भारतवर्षीया सभ्यताऽऽदर्शरूपेणावस्थिता । मेगास्थनीजमहोदयस्य वर्णनैर्ज्ञायते यद् मौर्यकालिके भारतवर्ष जना सर्वथा सत्यवादिन, धैर्यवन्त, विश्वसनीयाश्चासन् । द्वारोपरि निगडारोपणस्य प्रथा नासीत् । न्यायालये विचारार्थं जना स्वल्पतया एव गच्छन्ति स्म । मनुष्येषु पारस्परिकबन्धुत्वस्य प्रेम्णश्च व्यवहृतिरासीत् । विभिन्नविद्याना प्रचार पूर्वत एवासीत् । यदा मनुष्य पशुकृर्त्ति परिधाय वृक्षच्छायासु जीवन यापयति स्म तदा भारते उपनिषदां निर्माण जातम् । तथाऽन्यथा जनता स्वयतिशयेन तासामध्ययने परमानन्दमासादयति स्म । आधिभौतिकोपकरणानां तु वार्तैव का ? आध्यात्मिकानुभवेष्वस्माभिरतदेव ( सोऽहम् ) इति परमोच्चानुभूतीनामानन्दानुभूति समारब्धा ।

अध्यापकमैक्समूलरमहोदयेन स्वकीये एकस्मिन् व्याख्याने कथित "यदि माम् कोऽपि पृच्छेत् यत् स देश क कुत्र चास्ति यत्र मनुष्यै एतावती मानसिकोन्नति सम्पादिता यया तैरुत्तमोत्तमगुणानां समृद्धि कर्तुमशक्यत, यत्र च मानवसम्बन्धिनीनां सुमहावार्तानामुपरि विचारोऽक्रियत एव यत्र तासा समाधानकर्तारश्च समुत्पन्ना, तदाऽहमिदमेवोत्तर दास्यामि यत्स देश भारतवर्षम् एव वर्तते ।" इति ।

वैदिककाले भारतवर्षे अनेका महत्त्वपूर्णा विद्या प्रचलिता आसन् । प्रसङ्गानुकूलम्, ध्यातव्योऽय विषयश्चाग्रायमस्ति यत् ज्योतिर्विद्याया जन्मस्थानमपि भारतवर्षमेव वर्तते । यया विद्यया गगनस्थग्रहनक्षत्रादीनां गति, परिमाण, विप्रकृष्टतादीनां निश्चय क्रियते यस्मिन् शास्त्रे तस्या निरूपणमुपदेशो व्याख्यावर्णनादयश्च विधीयन्ते तद् ज्यौतिष शास्त्रमिति कथयन्ति । प्राचीनाचार्य ज्यौतिष भागद्वये सविभक्तम् । एक सिद्धान्तज्यौतिषमपर फलितज्यौतिषञ्च । इमे एवाङ्गलभाषायां Astronomy तथा

Astrology इति कथ्यते । येन भागेन स्फुटतयाऽग्रान्तरूपेण च गगनो विधाय ग्रहनक्षत्रादीनां गति सख्यादिकस्य च नियम, प्रकृते मनान्यफलाफलानां च दृढ रूपेण निश्चयः क्रियते स गणितम् अथवा सिद्धान्तज्यौतिषमिति कथयन्ति । येन विभागेन गगनस्थग्रहनक्षत्रादीनां गतिं दृष्ट्वा पृथिव्यां प्राणिनामागतावस्थायां शुभाशुभस्य च निर्णयः क्रियते स फलितज्यौतिषमिति कथयन्ति ।

"सूर्यसिद्धान्त" यदेक गणितज्यौतिषम् आर्षग्रन्थो वर्तते, यस्मिन् सिद्धान्तज्यौतिषस्य प्रायशः सर्वाणि वस्तूनि प्राप्यन्ते, तदनुसारम् अस्य ग्रन्थस्य रचना इत प्राक् (२०२०) एकसहस्राधिकपञ्चदशसहस्रोत्तरैकविंशति (२११५०७१) वर्षेभ्यः पूर्वं जाता । एतत्प्रमाणानन्तरमपि यदि कोऽपि पाश्चात्यविद्वानिदं कथयति भारतीयैः गणितविषयस्य सर्वा वार्ता अन्यदेशेभ्य समासादिता, तर्हि कथनस्यास्य किं महत्त्वं भविष्यति ।

## प्राचीनता

ज्यौतिषशास्त्रं वेदस्य प्रधानभूतमङ्गं नेत्रस्थानीयं वर्तते इति निर्विवादमेतत् । शाङ्खायनसूत्रे प्रोष्ठपदस्य ( भाद्रपदस्य ) पूर्णिमायां उपकरणकरणस्य समयः प्रतिपादितः । अनेकेषु स्थानेषु यज्ञारम्भस्य यज्ञसमाप्तेश्च शुभावसराणामपि निर्देशः कृतः । आदिकविना वाल्मीकिना रामचन्द्रादीनां जन्मकालिकग्रहाणां स्थित्या फलेन च फलितज्यौतिषस्य सत्ता स्पष्टतया प्रतिपादिता । इत्थमेव महाभारतेऽपि अनेकानि प्रमाणान्युपलभ्यन्ते । होराशास्त्रस्यैव जातकताजिकप्रश्नशकुनादयः विभागाः सन्ति यन्मध्ये "नरपतिजयचर्या"ख्यक ग्रन्थमन्यं वर्तते । प्राचीनकाले राज्ञां युद्धानि शकुनज्ञानां ज्योतिर्विदां निर्दिष्टसमयनिर्देशानुसारमेव भवन्ति स्म । अस्मिन् ग्रन्थे पञ्च अध्यायाः सन्ति । प्रथमाध्याये स्वरादिकानां ज्ञानं, द्वितीये युद्धारम्भस्य नियमाः शुभाशुभफलस्य निर्णयः, एवं तृतीयाध्याये दुर्गादिकानां निर्माणं कर्तुं मार्गविधिना रक्षायाः साधनानां च कर्तुमुपायाः उपवर्णिताः ।

नवम्यां शताब्द्यां राजपरमारभोजस्य समये मालवप्रदेशे नर्मदायाः उत्तरभागे धारापुरी नगरी मालवराज्यस्य राजधान्यासीत् । अस्य पिता भोजदेवनामक [illegible] शिवभक्त अध्यापक आसीत् । [illegible] भोजस्य जन्म अभूत् । [illegible] यत् किञ्चित् कालानन्तरं वर्तमान धारापुर्यां "भोजशाला" नामक प्राचीनभवने यत्र

गुर्जरप्रान्तस्य राज्ञः कुमारपालस्य भ्रातुर्जयपालनामधेयस्य शासने ११७० तम ईशवीये वर्षे आसीत्। एष जैनधर्मस्य परमविरोधी आसीत्। एवं ११७६ तम इशवीये वर्ष द्वारपालेनास्य हननं कृतम्। ग्रन्थरचनाया स्थानम् अनेहिल्पत्तन ग्राम मोवल्ली प्रदेशे वर्तते। प्रस्तुतग्रन्थस्योपरि जयलक्ष्मी नरहरिमञ्जर्याख्या टीका सन्ति।

एष ग्रन्थो मया स्वकीयेभ्य स्वर्गीयपूज्यपितृचरणेभ्य पण्डितरुद्रदेवदत्तपाठकेभ्य काशीहिन्दूविश्वविद्यालयीयज्यौतिषविभागाध्यक्षेभ्योऽधीत तस्मात् कालादेव मदीया एषा समाकाङ्क्षाऽऽसीत् यद्ग्रन्थस्यास्य शोभना काचिट्टीका भवेच्चेदध्ययनाध्यापने सुगमता सम्पद्येत। तस्मात्कालादेव मया यथामति अस्य टीका समारब्धा। एवं पूज्यपादै तस्या संशुद्धिरपि निर्वाहिता। परन्तु अद्यावधि तत्प्रकाशनावसरो न मया समासादित।

अहं हताशो भूत्वा अस्याः प्रकाशनस्येच्छां निगृह्य तूष्णीमवलम्ब्यातिष्ठम्। किन्तु संयोगवशादेव इत पञ्चवर्षेभ्य प्राक् "वाराणसेय चौखम्बासंस्कृत सीरीजाध्यक्षै" श्रीश्रेष्ठिमहोदयैः सहास्या प्रकाशनविषये मदीया वार्ता जाता। तैश्चापि प्रकाशनभार स्वीकृत। तेषामेव प्रयासेन एष ग्रन्थ सटीक प्रकाशमानीत। एतदर्थमहमनुगृहीत।

"भ्रान्तिर्मनुष्यधर्म" इत्येतदाभाणकानुसार यत्र कुत्रापि या काश्चित् त्रुटय संजाता विमलान्तःकरणै सुधीभि संशोध्य सूचनीया इति निवेदनमेतत्।

निर्जला एकादशी
वि० सं० २०२८

विनीत —
गणेशदत्तपाठकः

# विषय-सूची

अथ

# नरपतिजयचर्या

## 'सुबोधिनी' संस्कृत-हिन्दीव्याख्योपेता

### अथ शास्त्रसंग्रहाध्यायः

अथ मङ्गलाचरणम्—

अव्यक्तमव्ययं शान्तं नितान्तं योगिनां प्रियम् ।
सर्वानन्दस्वरूपं यत्तद्वन्दे ब्रह्म सर्वगम् ॥ १ ॥

विविधविबुधवन्द्यां भारतीं वन्दमानः
प्रचुरचतुरभावं दातुकामां जनेभ्यः ।
नरपतिरिति लोके ख्यातनामाभिधास्ये
नरपतिजयचर्यानामकं शास्त्रमेतत् ॥ २ ॥

पाठकाख्यो गणेशोऽहं नत्वा वीणाविभूषिताम् ।
नृपाणां जयचर्यायाष्टीकां कुर्वे सुबोधिनीम् ॥

अव्यक्तेति । अहमित्यध्याहारः कर्तव्यः । अव्यक्तं न व्यक्तम् अप्रकटरूपम्, अव्ययं नित्यं, शान्तं निरुपद्रवं नितान्तमत्यर्थेन योगिनां योगयतां प्रियं प्रीतिविषयं, सर्वानन्दस्वरूपं ( आनन्दं ब्रह्मणो रूपम् ) सर्वगं सर्वव्यापि एवम्भूतं यदेकं ब्रह्म तं वन्दे । विविधेति । विविधा नानाप्रकारा ये विबुधा देवाः पण्डिता वा तैर्वन्द्यां नमस्करणीयाम्, जनेभ्यः लोकेभ्यः प्रचुरं श्रेष्ठं चतुरभावं चातुर्यं दातुकामाम् भारतीं सरस्वतीम् नरपतिः इति लोके ख्यातनामाहम् वन्दमानः नमस्कुर्वाणः । नरपतिजयचर्या=नरपतेः राज्ञः तस्य जयचर्या जयपरिपाटीति नरपतिजयचर्यानामकमेतत् स्वरोदयशास्त्रं अभिधास्ये ॥

मैं अप्रकटरूप नित्य निरुपद्रव योगियों के नितांत प्रिय और सर्वानन्दस्वरूप सर्वव्यापि ब्रह्म को नमस्कार करता हूँ । लोकप्रसिद्ध 'नरपति' नाम का ग्रन्थकार अनेक देवता और पंडितों से वंदनीय मनुष्यों को अत्यंत चातुर्य देनेवाली सरस्वती

देवी को नमस्कार करते हुये समर में राजाओं के विजय की रीति को बतानेवाले ( स्वरोदय शास्त्र ) नरपतिजयचर्या नामक ग्रन्थ को प्रारम्भ कर रहा हूँ ॥ १–२ ॥

श्रुत्वादौ यामलान्सप्त तथा युद्धजयार्णवम् ।
कौमारीं कौशलं चैव योगिनीजालसंचरम् ॥ ३ ॥
रक्षोघ्नं च त्रिमुण्डं च स्वरसिंहं स्वरार्णवम् ।
भूवलं भैरवं नाम पटलं स्वरभैरवम् ॥ ४ ॥
तन्त्रं रणाह्वयं ख्यातं सिद्धान्तं जयपद्धतिम् ।
पुस्तकेन्द्रं च ढौकं च श्रीदर्शज्यौतिषं तथा ॥ ५ ॥
मन्त्रयन्त्राण्यनेकानि कूटयुद्धानि यानि च ।
तन्त्रयुक्तिं च विज्ञाय विज्ञानं वडवानले ॥ ६ ॥
एतेषां सर्वशास्त्राणां दृष्टसारोऽहमात्मना ।
सारोद्धारं भणिष्यामि सर्वसत्त्वानुकम्पया ॥ ७ ॥

श्रुत्यादौ इति । एतान् ग्रन्थान् श्रुत्वा अधीत्य सर्वशास्त्राणां दृष्टसार सारोद्धारं यथा स्यात्तथैव भणिष्यामि । अन्यत्स्पष्टम् ॥ ३–७ ॥

सर्वप्रथम इन सात ( ब्रह्मयामल, विष्णुयामल, रुद्रयामल, आदियामल, स्कन्दयामल, कूर्मयामल, देवीयामल ) यामलों का अभ्यास करके तथा युद्धजयार्णव कौमारी, कौशल, योगिनीजाल, रक्षोघ्न, त्रिमुंड, स्वरार्णव, भूवलभैरव, स्वरभैरव पटल आदि स्वरशास्त्र के अनेक ग्रन्थों को देखकर उनके तत्वों को कहता हूँ ( आचार्य उक्त ग्रन्थों के आधार से इस ग्रन्थ का निर्माण कर रहा है यही भाव है ) ॥ ३–७ ॥

अथ स्वरशास्त्रस्य प्रधानत्वम्—

पत्त्यश्वगजभूपालैः सम्पूर्णा यदि वाहिनी ।
तथापि भङ्गमायाति नृपो हीनस्वरोदयी ॥ ८ ॥
तावत्तरन्ति ते धीरा दोर्भ्यामाहवसागरम् ।
यावत्पतन्ति नो चक्रे स्वरास्ते वडवानले ॥ ९ ॥

पत्त्यश्वेति । स्वरोदयी स्वरशास्त्रं सम्पूर्णं जानातीति स्वरोदयी स्वरज्ञ गणकस्तेन हीन नृप पत्त्यश्वगजभूपाले सपूर्णदिग्विजयसामग्र्या युक्तेऽपि संपूर्णा वाहिनी सेना स्यात्तथापि भङ्गमायाति अर्थात् रणात्पलायते । तावत्तरन्तीति । ते धीरा स्वरज्ञदैवज्ञोक्तस्वरबलाढ्या भटा आहवसागरम् समामसमुद्र दोर्भ्यां बाहुभ्यां दैवज्ञोक्ता- वडवानले चक्रे नो पतति । वडवाग्निनी तन्मुखे

योऽनल अग्नि स वडवानलस्तस्य चक्रे ममृहे। अर्थात् स्वरा स्वनाममात्रादय यावदस्तमिता न तावदेव संग्रामपारं यान्ति ॥ ८-९ ॥

स्वरशास्त्रज्ञ ज्योतिषी की राष्ट्र को बड़ी आवश्यकता है क्योंकि—जिस राजा के साथ स्वरशास्त्र का जानने वाला दैवज्ञ ( ज्योतिषी ) नहीं होता है वह पैदल सिपाही, घोड़े, हाथी, राजाओं से युक्त सेनावाला होते हुये भी संग्राम में विजयी नहीं होता है। योद्धा लोग संग्राम में तभी तक विजयी होते हैं जब तक की स्वरज्ञ दैवज्ञ के बताये हुये स्वर अस्त न हो जावें ॥ ८-९ ॥

कथंचिद्विजयी युद्धे स्वरज्ञेन विना नृपः।
घुणवर्णोपमं तत्तु यथांधचटकग्रहः ॥ १० ॥
यस्यैकोऽपि गृहे नास्ति स्वरशास्त्रस्य पारगः।
रम्भास्तम्भोपमं राज्यं निश्चितं तस्य भूपतेः ॥ ११ ॥
स्वरशास्त्रे सदाभ्यासी सत्यवादी जितेन्द्रियः।
तस्यादेशस्य यः कर्त्ता जयश्रीस्तं नृपं भजेत् ॥ १२ ॥

कथंचिदपीति। स्वरज्ञेन स्वरशास्त्रज्ञेन विनापि नृप युद्धे संग्रामे कथञ्चिद्विजयी भवेत् तत्तु घुणवर्णोपमं भवति। यथा घुण कीटविशेष काष्ठं कर्त्तयन् तत्राक्षरमुत्किरति न तत्र तस्याक्षरकरणे प्रयास तथा यथान्धचटक पक्षिविशेष एवं स्वरज्ञानवियुक्तो युद्धार्थबलसैन्यमपि। यस्यैकोपीति। यस्य राज्ञ गृहे एकोऽपि स्वरशास्त्रस्य पारग स्वरज्ञ नास्ति तस्य भूपते राज्य रम्भास्तम्भोपम कदलीगर्भवन्निस्सारमित्यर्थ। स्वरशास्त्रे इति। सुगमम् ॥ १०-१२ ॥

राजसभा में स्वरशास्त्रज्ञ ज्योतिषी की ही प्रधानता होनी चाहिए—इस कथन की पुष्टि की जाती है—स्वर के जानने वाले दैवज्ञ के बिना भी कदाचित् राजा युद्ध में विजयी हो सकता है किन्तु उसकी वह विजय घुणों से बनाये हुये अक्षरों के और अंधे से गृहीत पक्षी चटक के समान होती है। जिस राजा के पास स्वरशास्त्र का पारगत एक भी दैवज्ञ नहीं होता है उसका राज्य केले के खंभे के समान निस्सार होता है। स्वरशास्त्र का अभ्यास करने वाले, सत्यवादी और जितेन्द्रिय दैवज्ञ की आज्ञा पालन करने वाले राजा को निरन्तर विजयलक्ष्मी प्राप्त होती है ॥ १०-१२ ॥

अथ स्वरबलप्रशंसामाह।

दर्शकेन शतं तैश्च सहस्रं शतसंख्यया।
स्वरोदयबली राजा दशघ्नं हन्ति लीलया ॥ १३ ॥

पुष्पैरपि न योद्धव्यं यावद्धीनस्वरोदयः।
स्वरोदयबले प्राप्ते योद्धव्यं शस्त्रकोटिभिः ॥ १४ ॥
स्वरज्ञः शकुनज्ञश्च दैवज्ञो मन्त्रपारगः।
केरलीवित्तथा राज्ञां कीर्त्तितं रत्नपंचकम् ॥ १५ ॥
स्वरचक्राणि चक्राणि भूबलानि बलानि च।
ज्यौतिषं शकुनं चैव षडंगानि वदाम्यहम् ॥ १६ ॥
यामलेषु च सर्वेषु यान्युक्तानि स्वरोदये।
विंशतिः स्वरचक्राणि वक्ष्येऽहं तानि चाधुना ॥ १७ ॥
मात्रा वर्णो ग्रहो जीवो राशिर्भं पिण्डयोगकौ।
द्वादशाब्दं तथाब्दं च अब्दार्धमृतुमासिकम् ॥ १८ ॥
पक्षाहर्नाडिकं चक्रं तिथिवारर्क्षयोगकम्।
दिशि तत्त्वावधानं च दिनफलं च वदाम्यहम् ॥ १९ ॥

दशैकेनेति—स्वरोदयबलेन प्राप्तस्वरोदयबली राजा एकेन वीरेण दश योधान् लीलया हन्ति मारयति। एवं दशयोधेन एकशतं, शतसंख्यया सहस्रम् अर्थादेकगुणो दशगुण शत्रु हन्ति। पुष्पैरपि—स्पष्टार्थं। स्वरज्ञेति—सुगमम्। स्वरचक्राणि—स्पष्टम्। यामलेषु यानि स्वरचक्राणि विंशतिसंख्याकानि तान्यहं अग्रे वक्ष्ये। मात्रास्वर। वर्णस्वर। ग्रहस्वर। जीवस्वर। राशिस्वर। नक्षत्रस्वर। पिण्डस्वर। योगस्वर। द्वादशवार्षिकस्वर। वार्षिकस्वर। अयनस्वर। ऋतुस्वर। मासिकस्वर। पक्षस्वर। दिनस्वर। नाडीस्वर। तिथिवारर्क्षयोगस्वर दिक्स्वर। तात्कालिकस्वर। दिनफलस्वरेति ॥ १३–१९ ॥

स्वरबल का प्रभाव है कि स्वरबल से युक्त राजा एक योद्धा से दस योद्धाओं को, दश योद्धाओं से एकसौ योद्धाओं को और एक सौ योद्धाओं से एक हजार योद्धाओं को लीला से ही मार सकता है। हीन स्वरबल की स्थिति में तो पुष्प से भी युद्ध नहीं करना चाहिये, स्वरबल प्राप्त होने पर अनेक शस्त्रधारियों से भी युद्ध करना चाहिय। स्वरज्ञ, शकुनज्ञ, दैवज्ञ, मन्त्रशास्त्र का पारगत, केरलीय ज्यौतिष का जाननेवाला, राजा के ये पंचरत्न हैं। स्वरचक्र, चक्र, भूबल, बल, शकुन और ज्यौतिष इन छ अंगों को मैं कहता हूँ। सभी विषयों में जो बीस स्वरचक्र कहे गये हैं उसे मैं कह रहा हूँ। मात्रास्वर, वर्णस्वर, ग्रहस्वर, जीवस्वर, राशिस्वर, नक्षत्रस्वर, पिण्डस्वर, योगस्वर, द्वादशवार्षिकस्वर, वार्षिकस्वर, अयनस्वर, ऋतुस्वर, मासिकस्वर, पक्षस्वर, दिनस्वर,

नाडीस्वर, तिथिवार योग से उत्पन्न स्वर, दिशास्वर, तात्कालिकस्वर और दिनफलस्वर ये २० स्वरचक्र हैं ॥ १३–१९ ॥

अथ चतुरशीतिचक्रनामानि—

पूर्वमुक्तेषु शास्त्रेषु मया ज्ञातानि यानि च ।
चतुरशीतिचक्राणि तेषां नामानि वच्म्यहम् ॥ २० ॥
एकाशीतिपदं चक्रं शतपदं नवांशकम् ।
छत्रं सिंहासनं चक्रं कूर्मं पञ्चविधं त्विदम् ॥ २१ ॥
भूदेशनगरक्षेत्रं गृहकूर्मं च पञ्चमम् ।
पद्मचक्रं फणीशाख्यं राहुकालानलं मतम् ॥ २२ ॥
सूर्यकालानलं चक्रं चन्द्रकालानलं तथा ।
घोरकालानलं चक्रं शूलकालानलं मतम् ॥ २३ ॥
शशिसूर्यसमायोगे चक्रं कालानलं मतम् ।
संघट्टं सप्तमं ज्ञेयं सप्तकालानलानि च ॥ २४ ॥
तिथिर्वारं च नक्षत्रं त्रिधा चैव कुलाकुलम् ।
कुम्भचक्रं द्विधा प्रोक्तं राशिनक्षत्रसम्भवम् ॥ २५ ॥
वर्गप्रस्तारवेधं च त्रिधा तुंबुरुमेव च ।
भूचरं खेचरं पान्थं नाडीचक्रं द्विधा मतम् ॥ २६ ॥
कालचक्रं फणिद्वंद्वं सूर्यास्यं चन्द्रजं तथा ।
कविचक्रं द्विधा प्रोक्तं स्थानस्वाम्यृक्षपूर्वकम् ॥ २७ ॥
खलकाख्यं द्विधा प्रोक्तं कृत्तिकास्थानभादिकम् ।
कोटचक्राष्टकं प्रोक्तं चतुरस्रादिभेदतः ॥ २८ ॥
गजमश्वं रथं व्यूहं कुन्तं खड्गं छुरिं धनुः ।
सौरिं सेवां नरं डिंभं पक्षिवर्गायवर्पणम् ॥ २९ ॥
सप्तरेखोद्भवं चक्रं पञ्चरेखेंदुभास्करम् ।
त्रिविधं मातृकाचक्रं विज्ञेयं श्येनतोरणे ॥ ३० ॥
अहिलांगलबीजोप्तिवृपाख्यं सप्तनाडिकम् ।
चक्रं सांवत्सरस्थानं मासचक्रं दिनाह्वयम् ॥ ३१ ॥

१ विंदिभम् या वृद्धिजम् इत्यपि पाठ ।

एतानि सर्वचक्राणि ज्ञात्वा युद्धं समाचरेत् ।
जयेदिह न संदेहः शक्रतुल्यं च भूपतिम् ॥ ३२ ॥

पूर्वमुक्तेष्विति । सुगमम् । एकाशीत्यारभ्य एतानीत्यत यावत् चक्रनामानि । उक्तानि सुगम च ॥ २०-३२ ॥

पूर्व शास्त्रों में कहे हुये ८४ चक्रों की निर्माणशैली ओर उनकी गति स्थिति को समझकर आचार्य उनके नामों को कह रहा है । ८१ पद्मचक्र, शतपद्चक्र, नरमात्र चक्र, छत्रचक्र, सिंहासनचक्र, कूर्मचक्र, भू, देश, नगरक्षेत्रचक्र, गृहकूर्मचक्र, पक्षचक्र, फणिचक्र, राहुकालानलचक्र, सूर्यकालानलचक्र, चन्द्रकालानल, घोरकालानल, गूढ कालानल, चन्द्रसूर्यजनितकालानलचक्र, सघट्टचक्र, कुलाकुलचक्र, कुम्भचक्र, वर्णप्रस्तार-चक्र, तुम्बुरचक्र, भूचरचक्र, खेचरचक्र, नाडीचक्र, कालचक्र, फणिचक्र, स्थारचक्र, दलचक्र, कोटचक्र, गजचक्र, अश्वचक्र, रथचक्र, व्यूहचक्र, कुन्तचक्र, खड्गचक्र, छुरीचक्र, धनुचक्र, शनिचक्र, सेवाचक्र, नरचक्र, डिम्भचक्र, पक्षिचक्र, वर्गचक्र, आयचक्र, वृष्टिचक्र, सप्त शलाकाचक्र, पञ्चशलाकाचक्र, श्येनचक्र, तोरणचक्र, अहिबलचक्र, लांगलचक्र, बीजोप्तिचक्र, वृषचक्र, दिनफलचक्र, इन सभी चक्रों को जानते हुय युद्ध को आरम्भ करने से राजा इन्द्र के समान शत्रु राजा को भी जीत सकता है इसमें सन्देह नहीं है ॥ २०-३२ ॥

अथ भूबलानि—

अथातः सम्प्रवक्ष्यामि भूबलान्यभिधानतः ।
कविद्वन्द्वे तथा दुर्गे चतुरङ्गे महाहवे ॥ ३३ ॥
स्वरोदयैश्च चक्रैश्च शत्रुर्यत्र समोऽधिकः ।
तत्र युद्धे बल देयं भूबलैर्विजयार्थिनाम् ॥ ३४ ॥
तेषां नामान्यहं वक्ष्ये ख्याता ये ब्रह्मयामले ।
चतुरशीतिसंख्याना यद्बलेन जयी रणे ॥ ३५ ॥
औड्री जालन्धरी पूर्णा कामा कोलैकवीरिका ।
शिलीन्ध्राश्च महामारी क्षेत्रपाली च वशजा ॥ ३६ ॥
रुद्रकालानलो प्रोक्ता कालरेखा निरामया ।
जयलक्ष्मीर्महालक्ष्मीर्जया विजयभैरवी ॥ ३७ ॥
बाला योगेश्वरी चंडी माया सुमुककर्त्तरी ।
शार्दूली सिंहिली तन्वी महामाया महेश्वरी ॥ ३८ ॥
देवकोटिः शिवा शक्तिर्धूम्रा माला वराटिका ।
त्रिमुण्डा मत्सरी धर्मा सूत शिष्टा क्षयाक्षया ॥ ३९ ॥

दुर्मती प्रवरा गौरी काली नारहरी बला।
खेचरी भूचरी गुह्या द्वादशी वृष्टिकेवला ॥ ४० ॥
त्रैलोक्यविजया सौरी कराली वडवापरा।
रौद्री च शिशुमातङ्गी चाभेया दहनी जिता ॥ ४१ ॥
बहुला वर्गभूमिश्च कपाली चानिलानला।
चन्द्रार्कबिम्बभूमिश्च ग्रहराशिविलग्नगा ॥ ४२ ॥
राहुकालानली भूमिः स्वरभूमिर्द्विधा मता।
रुद्रस्त्रिमासिकश्चैव राहुश्चाष्टविधस्तथा ॥ ४३ ॥
चन्द्रः सदाविध. सूर्यश्चतुर्धा योगिनी त्रिधा।
कालचक्रं त्रिभेदं च तिथिनक्षत्रवारजम् ॥ ४४ ॥
इमानि भूबलान्यत्र ज्ञात्वा यः प्रविशेद्रणे।
अरयस्तस्य नश्यन्ति मेघा वातहता यथा ॥ ४५ ॥

भूबलाना प्रशसामाह । स्वरोदयैश्चेति । स्वरैर्बालादिभि शत्रुर्यदि समस्तुल्योऽधिको वा भवति तत्र जयार्थिना राज्ञा भूबलैर्बल देयम् । कथमसौ मया जेतव्य इति प्रश्ने स्वरतो भूबलानि तस्मै दत्त्वा युद्धाय त सज्जीकुर्यादिति । भूबलाना नामान्याह—औड्री इत्यादय स्पष्टार्था ॥ ३४–४५ ॥

आचार्य, महासमर के उपयुक्त भूबल की प्रशसाके साथ भूबल की मीमासा कर रहा है—यदि युद्ध म शत्रु नाम से उत्पन्न मात्रादि द्वादशादिक काल स्वरों के तुल्य या अधिक बल वाला राजा हो तो विजयेच्छु राजा उसे कैसे जीते। ऐसी स्थिति में उस योद्धा को भूबल से बल देना चाहिये। शेष ओड्री इत्यादि भूबल के नाम है ॥ ३४–४५ ॥

अथ यन्त्रमन्त्रौषधबलम्—

शत्रोः समाधिके नाम्नि स्वरैश्चक्रैश्च भूबलैः।
स्थानसैन्याधिके शत्रौ बलविज्ञानसयुते ॥ ४६ ॥
अभङ्गे चाप्यभेदे च असाध्ये दुर्जये रिपौ।
जयोपायमहं वक्ष्ये मन्त्रयन्त्रादिक बलम् ॥ ४७ ॥
रणाभिषेचन दीक्षां रणार्चां रणकङ्कणम्।
वीरपट्टं रणे पट्टं जयपट्टस्य बंधनम् ॥ ४८ ॥

मेखलाकवचन्यासं मुद्रा रक्षा च कञ्चुकम् ।
औषधं तिलकं तज्ञा घुटिकाश्च कपर्दिका ॥ ४९ ॥
योगे घटितशस्त्राणि शस्त्ररक्षां च मोटनम् ।
शस्त्रलेपाश्च विविधा बाणानां पिच्छबन्धनम् ॥ ५० ॥
त्रासकं काहला ढक्का मुरज भस्मसाधनम् ।
मारणं मोहनं स्तम्भ विद्वेषोच्चाटन वशम् ॥ ५१ ॥
पताका पिच्छकं यन्त्र परविद्याविनाशनम् ।
शान्तिकं निजसैन्यस्य कर्त्तव्यं जयकाङ्क्षिभिः ॥ ५२ ॥
बलान्येतानि यो ज्ञात्वा सङ्ग्रामं कुरुते नरः ।
असाध्यस्तस्य नैवास्ति शक्रतुल्योऽपि भूपतिः ॥ ५३ ॥

शत्रौ समाधिके इति । सुस्पष्टम् । असङ्गे इति । यथा शत्रौ सुकरेण जयो भवति तथा मन्त्रयन्त्रौषधिबलानि वक्ष्ये । अन्यत्सुगमम् ॥ ४६-५३ ॥

आचार्य यहाँ मन्त्र यन्त्र, तन्त्र आदि की उपादेयता का भी संकेत कर रहा है— यदि शत्रु के नाम स्वर भूबलचक्र स्थान सैन्य से अपनी समता हो अथवा शत्रु अधिक बलशाली हो अथवा दुर्जय हो अथवा दुःसाध्य हो तो मन्त्र, यन्त्रादि के द्वारा बल प्राप्त करना चाहिये । उन मन्त्र, तन्त्र आदि की विधि कहता हूँ । रणाभिषेचन, दीक्षा, रणार्चा, रणकङ्कण, वीरपट्ट, रणपट्ट, जयपट्ट, मेखला, कवच का न्यास, मुद्रा रक्षा, कञ्चुकी, औषधि, तिलक, घुटिका कपर्दिका, योगों में गढ़े हुये शस्त्र रक्षा, मोटन अनेक प्रकार के शस्त्रों के लेप, बाणों के बंधन, त्रास देने वाला काहला, ढक्का, मुरज, भस्म साधन, मारण मोहन, स्तम्भन, विद्वेषण उच्चाटन, वशीकरण, पताका, पिच्छक, परकृत्या को नाश करने वाले यन्त्र, अपनी सेना के सभी उपद्रवों के नाश करने वाले शांति के उपाय आदि इन बलों को जानकर जो कोई मनुष्य युद्ध करता है वह इन्द्रतुल्य पराक्रमी राजा को भी परास्त कर सकता है । उसके लिये यह कार्य असाध्य नहीं है ॥ ४६-५३ ॥

अथ ज्योतिषाङ्गम्—

गणितं व्यवहार च होराज्ञान परिस्फुटम् ।
त्रिस्कन्ध ज्योतिषं वक्ष्ये जयचर्यास्वरोदये ॥ ५४ ॥
ग्रहतिथ्याद्यानयनमुदयास्तौ च शीघ्रगौ ।
शत्रुमित्रसमाः खेटा राश्यधीश बलाबलम् ॥ ५५ ॥
उच्चनीचाश्च मध्यस्था दृष्टिस्थानानि यान्यपि ।

गोचरं च तथा वेधं दशास्वन्तर्दशा पुनः ॥ ५६ ॥
वारफलं तथा सन्धिर्लत्तावेधमुपग्रहम् ।
शुभाशुभफलं वक्ष्ये तिथिधिष्ण्यगुणागुणम् ॥ ५७ ॥
चन्द्रताराबलं ज्ञेयं भद्रा चैव त्रिपुष्करम् ।
यमघण्ट यमदंष्ट्रं चक्र चैवार्गलं तथा ॥ ५८ ॥
देवरक्षोनृणां भानि पार्श्वोर्ध्वाधोमुखानि च ।
बालं कुमारं तरुणं वृद्धमृत्युस्वरास्तथा ॥ ५९ ॥
कालवेलां तथा होरां यामार्धं कुलिकं तथा ।
वक्ष्ये वेधं च सिद्धं च शीघ्रं प्राणापहारिणीम् ॥ ६० ॥
परिघं शूलधिष्ण्यं च वारयोगं च योगिनीम् ।
दिग्भद्रा कालपाश च राहोरस्तं च भार्गवम् ॥ ६१ ॥
छायोत्पत्ति त्रिधा वक्ष्ये त्रिषु मध्ये दिनाष्टगाम् ।
दिनमानं दिने भुक्ति छायोदयप्रमाणकम् ॥ ६२ ॥
सिद्धच्छायात्रिषष्टि च दुष्टभा सप्तविंशतिम् ।
लग्नोदयं स्वदेशीयं यंत्रतो लग्नसाधनम् ॥ ६३ ॥
लग्नमानं तथा होरा राशिदृक्कनवांशकम् ।
द्वादशांशं च त्रिंशांशमुदयास्तांशसाधनम् ॥ ६४ ॥
लग्नाच्छुभाशुभं वक्ष्ये यात्रोद्वाहादिनिर्णयम् ।
देवतानां प्रतिष्ठां च दीक्षा यात्राप्रवेशनम् ॥ ६५ ॥
वास्तुदीपार्घविन्यासो कालविशोपकस्तथा ।
जलयोगोऽर्घकांडश्च वर्षमासाहनिर्णयः ॥ ६६ ॥
तिथ्यादिः खेचराश्चन्द्रस्तत्कालोदयजः स्फुटम् ।
अवस्थानेष्टमुष्टि च लूकभेदं वदाम्यहम् ॥ ६७ ॥
अङ्गस्पन्दानि सर्वाणि कालचिह्नानि यानि च ।
दुष्टारिष्टान्यहं वक्ष्ये तथा तेषां च शान्तिकम् ॥ ६८ ॥
ज्यौतिषाङ्गमिदं सर्वं ये जानन्ति मनीषिण ।
दीपवत्तं विजानीयान्मोहान्धकारनाशनम् ॥ ६९ ॥

पीतकी पिङ्गला काको यक्ष' शिवा क्रमेण च।
पञ्चरत्नमिद वक्ष्ये पष्ठाङ्के शाकुने मते॥ ७०॥

गणितमिति। गणितमित्यारभ्य पञ्चरत्नमिदमित्येतावत्पर्यन्त स्पष्टार्थाः॥

अनेक भेद युक्त ज्यौतिषशास्त्र के वर्णन सम्बन्ध के ५४ से ७० पर्यन्त श्लोकों के अर्थ स्पष्ट ही है॥ ५४-७०॥

इति नरपतिजयचर्यायां प्रथमोऽध्याय॥ १॥



# अथ मात्रास्वराऽध्यायः

अथातः सम्प्रवक्ष्यामि ख्याता ये ब्रह्मयामले ।
मात्रादिभेदभिन्नानां स्वराणां षोडशोदयान् ॥ १ ॥
मातृकायां पुरा प्रोक्ताः स्वराः षोडशसङ्ख्यया ।
अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः ।
तेषां द्वावन्तिमौ (अं अः) त्याज्यौ–
–चत्वारश्च ( ऋ ॠ ऌ ॡ ) नपुंसकौ ॥ २ ॥
शेषा दश स्वरास्तेषु स्यादेकैको द्विके द्विके ।
ज्ञेयास्तत्र स्वरा आद्या–
–ह्रस्वाः ( अ इ उ ए ओ ) पञ्च स्वरोदये ॥ ३ ॥
लाभालाभं सुखं दुःख जीवित मरणं तथा ।
जयः पराजयश्चेति सर्वं ज्ञेयं स्वरोदये ॥ ४ ॥
स्वरादिमात्रिकोच्चारो मातृस्थासं जगत्त्रयम् ।
तस्मात्स्वरोद्भवं सर्वं त्रैलोक्यं सचराचरम् ॥ ५ ॥
अकाराद्या स्वरा' पञ्च ब्रह्माद्या पञ्चदेवता' ।
निवृत्त्याद्या' कलाः पञ्च इच्छाद्या' शक्तिपञ्चकम् ॥ ६ ॥

अथात इति । स्पष्टार्थं । मातृकायामिति । पुरा मन्त्रे अकारादय षोडश-स्वरा प्रोक्ता । तेषा मध्ये द्वावन्तिमौ अं अः त्याज्यौ । चत्वारो ऋ ॠ ऌ ॡ नपुंसकास्त्याज्या । शेषेति । शेषादशस्वरा अ आ इ ई उ ऊ ए ऐ ओ औ ह्रस्वस्वरास्तेपु द्विद्विकेषु एकैकमेव गृहीयात्। तद्यथा अ इ उ ए ओ एवम्स्वरूपा । ओदमनधार्यम । अकारेण यत्फल शुभाशुभ तदेवाकारेणापि बोध्यम । अस्मिन्नेपाश्वेदकार पीडितस्तदाऽऽकारोऽपि पीडित । एवमिकारादावपि बोध्यम् । लाभा

लाभमिति। एषा स्वराणामुदये लाभालाभप्रश्नेलाभ अलाभञ्च वक्तव्यौ। सुखप्रश्ने सुखदु ख च, रोगादिना जीवितमरणप्रश्ने जीवित मरण च विद्यात्॥ सर्वेषा प्राणिना नामग्रहणे वर्णा अकारादिमातृकाभि विना उच्चारयितु न शक्या अतएव प्रश्ने स्वरा फलप्रकाशका भवन्ति। अकाराद्या इति। अकाराद्या पञ्चस्वरा ब्रह्मादय पञ्च देवता ज्ञेया। ब्रह्मविष्णुरुद्रचन्द्रसूर्यात्मका क्रमेण ज्ञेया। प्रश्नकर्त्तु य स्वरोदयस्त दैवत ध्यायेदित्यर्थ। तत एव निवृत्त्याद्या पञ्चकला निवृत्तिप्रतिष्ठाविद्याशान्त्यतिशान्तयय। अर्थात् यात्राप्रश्ने चेदकारोदयस्तदा निवृत्ति निवर्त्तन स्यात्। इकारोदये प्रतिष्ठाप्रश्ने प्रतिष्ठा वाच्या। उकारोदये विद्याप्राप्ति। एकारोदये शान्तिप्रश्ने शुभ वदेत् ओकारोदये अतिशान्तिर्वाच्या। अतिशान्तिर्मुक्ति। एव तत्तदुदये ब्रह्मादि ध्यात्वा तत्तत्कार्य विधेयम्। तत एव इच्छाद्य शक्तिपञ्चकम्। इच्छा, ज्ञाना, प्रभा, श्रद्धा, मेधा इत शक्तिपञ्चकम्॥ १–६॥

अब मैं ब्रह्मयामल म कहे हुये मात्राभेद से भिन्न मातृकाचक्र में कहे हुये सोलह स्वरों को कह रहा हूँ। अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ, अ अ ये सोलह स्वर हैं, इनम से दो अन्त क अ अ त्याग देना चाहिए। और चार ऋ ॠ ऌ ॡ ये नपुंसक स्वर हैं। शेष दशस्वर (अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ) हैं इनमदो दो स्वरों का एक ही स्वर मानना चाहिए जैसे अ आ को केवल अ मानना चाहिये। इस प्रकार पाच ही अ, इ, उ, ए ओ स्वर मुख्य हैं। सभी चराचर पदार्थों के नामोच्चारण करने में अकारादि मातृका के विना वर्णो का उच्चारण नहीं हो सकता है इसलिये मातृका से तीनों जगत् व्याप्त है अत शुभाशुभ फल के कहने के लिये स्वरों की ही प्रधानता है। अकारादि अ, इ, उ, ए, ओ स्वरों के क्रम से ब्रह्मा, विष्णु, रुद्र, सूय और चन्द्रमा ये स्वामी हैं। अथात् अकारादि स्वरों क उदयकाल म प्रश्नकर्ता इन्हीं देवताओं का स्मरण कर कार्य को करे, एव इन्हीं स्वरों के उदयकाल म निवृत्ति आदि क्रम से पाच कलायें होती हैं ( निवृत्ति, प्रतिष्ठा, विद्या, शान्ति और अतिशान्ति ) य पांच कलाओं के नाम हैं। और इन्हीं स्वरों क उदयकाल में इच्छादि पाच शक्तियाँ होती हैं। उनके नाम इच्छा, ज्ञाना, प्रभा, श्रद्धा और मेधा हैं॥ १–६॥

मायाद्याश्चक्रभेदाश्च धराद्यं भूतपञ्चकम्।
शब्दादिविषयास्ते च कामवाणा इतीरिताः॥ ७॥
पिंड पद तथा रूप रूपातीत निरंजनम्।
स्वरभेदस्थित ज्ञानं ज्ञायते गुरुतः सदा॥ ८॥
अकाराद्याः स्वरा॰ पञ्च तेषामष्टविधास्त्वमी।
मात्रा वर्णो ग्रहो जीवो राशिर्भं पिंडयोगकौ॥ ९॥

**प्रसुप्तो बुध्यते येन येनागच्छति शब्दितः।**
**तत्र नामाद्यवर्णे या मात्रा मात्रास्वरः स हि ॥ १० ॥**

मायाद्या इति—तत एव मायादिश्चक्रभेदा । चतुरस्र, अर्धचद्र त्रिकोण, द्वित्रिकोणम् वर्तुलम्। तत एव शब्दाद्या पञ्चविषया । गन्ध, रस, रूप, स्पर्श, शब्दा । तत एव धराद्य भूतपञ्चकम् । पृथ्वी, जल, अग्नि, वायु, आकाशा । तत एव पञ्च कामबाणा [1]। शोषण-मोहन-दीपन-सतापन-प्रमथ-नरूपा । पिण्डेति । पिंडसञ्ज्ञा बालस्य । पदसञ्ज्ञा कुमारस्य । रूपसञ्ज्ञा यून । रूपातीतसञ्ज्ञा वृद्धस्य । निरजनसञ्ज्ञा मृतस्य । इमा स्वरभेदसञ्ज्ञा गुरुतो गुरुमुखान्नापेक्षितम् । यथा सदानन्दस्य नाम्नि अकारो वर्तते अत सदानन्दस्य मात्रास्वरोऽकार एव सर्वेषा नाम्नि स्वरा ज्ञेया ॥ ७-१० ॥

अ, इ, उ, ए, ओ, ये प्रसिद्ध पाच स्वर ( ज्योतिषशास्त्र के स्वर भाग में ) हैं। इन्हीं पाँच स्वरों के मायादि पाँच ( चतुरस्र, अर्धचन्द्र, त्रिकोण, षट्कोण, वर्तुल ) चक्रभेद हैं। अर्थात् इन स्वरों के उदयवाले अपने अपने चक्रों का पूजन करें या ग्रहण करें। ये ही स्वर गधादि पाँच विषयवाले हैं। अर्थात् अकार के उदय में गन्ध विषयक, इकारोदय में रसविषय, उकार में रूपविषय, एकारोदय में स्पर्शविषय और ओकार में शब्दविषय है। इन्हीं पाँच स्वरों के धरा आदि ( पृथ्वी, जल, अग्नि, वायु, आकाश ) पाँच तत्त्व हैं। अर्थात अकार स्वर के उदय में पृथ्वीगत प्रश्न, इकार के उदय में जलगत, उकार म अग्निगत, एकार में वायुगत और ओकार के उदय में आकाशगत अर्थात् ऊर्ध्वगत प्रश्न है। इन्हीं पाँच स्वरों के पाँच कामबाण ( शोषण, मोहन, दीपन, सतापन, प्रमथन ) हैं। पिंड अर्थात् शरीर का जो तत्त्व उसका जो स्वरूप उसके ज्ञान को रूपातीत कहते हैं उसको भी अतिक्रमण करने को निरजन अर्थात् शून्य कहते हैं। अथवा इन पाँच स्वरों की जो पाँच ( बाल-कुमार-युवा, वृद्ध मृत्यु या शून्य ) अवस्थायें हैं उन्हीं को क्रम से पिंड, पद, रूप, रूपातीत और निरजन कहते हैं। यही पाँच अवस्थायें जीवधारियों की भी होती हैं। वेदान्त-शास्त्र के पृथ्वी, अप्, तेज, वायु और आकाश इन पञ्चतत्त्वों के पञ्चीकरण से जैसे ब्रह्मप्राप्ति होती है वैसे ही यहाँ भी योगाभ्यास और गुरुमुख से अध्ययन द्वारा रहस्यमय उक्त ज्योतिषशास्त्र का रहस्यमय स्वरशास्त्र का ज्ञान भी परमार्थप्राप्ति का परम साधन बताया गया है। किन्तु इन पाँच स्वरों का भेद स्वरों म ही स्थित है जो कि गुरुमुख से ही जाना जा सकता है। जैसे सदानन्द के नाम में अकार है अत सदानन्द का अकार मात्रास्वर हुआ। शेष चक्र म स्पष्ट है ॥ ७-१० ॥

---

१ मायाद्याश्चक्रभेदाश्च धराद्य भूतपञ्चकम् ।
गन्धादिविषयास्ते च कामबाणा इतीरिता ॥ ( इत्यपि पाठ )

## मात्रास्वरचक्रम् ।

| बाल | कुमार | युवा | वृद्ध | मृत | अवस्था |
|---|---|---|---|---|---|
| अ | इ | उ | ए | ओ | स्वरा |
| क | कि | कु | के | को | |
| ख | खि | खु | खे | खो | |
| ग | गि | गु | गे | गो | |
| घ | घि | घु | घे | घो | |
| च | चि | चु | चे | चो | |
| छ | छि | छु | छे | छो | |
| ज | जि | जु | जे | जो | |
| झ | झि | झु | झे | झो | |
| ट | टि | टु | टे | टो | |
| ठ | ठि | ठु | ठे | ठो | |
| ड | डि | डु | डे | डो | |
| ढ | ढि | ढु | ढे | ढो | |
| त | ति | तु | ते | तो | |
| थ | थि | थु | थे | थो | |
| द | दि | दु | दे | दो | |
| ध | धि | धु | धे | धो | |
| प | पि | पु | पे | पो | |
| फ | फि | फु | फे | फो | |
| ब | बि | बु | बे | बो | |
| भ | भि | भु | भे | भो | |
| म | मि | मु | मे | मो | |
| य | यि | यु | ये | यो | |
| र | रि | रु | रे | रो | |
| ल | लि | लु | ले | लो | |
| व | वि | वु | वे | वो | |
| श | शि | शु | शे | शो | |
| ष | षि | षु | षे | षो | |
| स | सि | सु | से | सो | |
| ह | हि | हु | हे | हो | |
| ब्रह्मा | विष्णु | रुद्र | सूर्य | चन्द्र | देवता: |
| निवृत्ति | प्रतिष्ठा | विद्या | शान्ति | अतिशान्ति | कला |
| इच्छा | ज्ञाना | प्रभा | श्रद्धा | मेधा | शक्ति |
| चतुरस्र | अर्धचन्द्र | त्रिकोण | षट्कोण | वर्तुल | चक्र |
| धरा | जल | अग्नि | वायु | आकाश | पञ्चभूत |
| गन्ध | रस | रूप | स्पर्श | शब्द | विषय |
| पिण्ड | पद | रूप | रूपातीत | निरञ्जन | ध्यान |

वर्णस्वरचक्रम्।

कादिहान्तं लिखेद्वर्णान् स्वराधो ङञणोज्झितान्।
(ककारादिहकारान्तांल्लिखेद्वर्णान्स्वराधो ङञणोज्झितान्)
तिर्यक्पंक्तिक्रमेणैव पञ्चत्रिंशत्प्रकोष्ठके॥ ११॥
नरनामादिमो वर्णो यस्मात्स्वरादधः स्थितः।
स स्वरस्तस्य वर्णस्य वर्णस्वर इहोच्यते॥ १२॥
न प्रोक्ता ङञणा वर्णा नामादौ सन्ति ते नहि।
चेद्भवन्ति तदा ज्ञेया गजडास्ते यथाक्रमम्॥ १३॥
यदि नाम्नि भवेद्वर्णः संयुक्ताक्षरलक्षणः।
ग्राह्यस्तदादिमो वर्ण इत्युक्तं ब्रह्मयामले॥ १४॥

कादीति—अकारादि अ इ उ ए ओ स्वराणामधः ककारादारभ्य हकारान्तान् वर्णान् ङ ञ ण वर्णान् उज्झितान् त्यक्त्वा तिर्यक् पंक्तिक्रमेण पञ्चत्रिंशत्प्रकोष्ठके लिखेत्। नरनामादिरिति। नरनाम्नि य आदिमो वर्णः स यस्स्वरादधः स्थितः स स्वरः तस्य वर्णस्य वर्णस्वर इत्युच्यते। यथा देवदत्तस्य नाम्नि प्रथमवर्णो दकारः स चक्रे ओकारस्वराधः स्थितोऽस्ति अतो देवदत्तस्य ओकारो वर्णस्वर इति। एवं सदानन्दस्य वर्णस्वरः एकार एव। एवं सर्वत्र विचारः कर्त्तव्यः। न प्रोक्ता इति। यदि कथञ्चित् नामादौ ङ ञ णा वर्णास्तदा तत्र यथाक्रमेण गजडा वर्णा ग्राह्याः। तत्र गजडानां यो वर्णस्वरः सोऽनुक्रमेण ङञणानां बोध्या इति। यदि नाम्नीति। यदि कस्यचिन्नरस्य देशस्य वा नामादिमो वर्णः संयुक्ताक्षरो भवति। तदा तत्र वर्णस्वरः कः ग्राह्य इति जिज्ञासायामाह—ग्राह्यस्तदादिमो वर्णः। यथा कस्यचिन्नाम श्रीपतिरिति तत्रादिमो वर्णः शकारस्तस्योपरितनो वर्णः इकारः। अतः श्रीपतेर्वर्णस्वरः इकार एव। अथ यस्य बहूनि नामानि तत्राह कल्याणवर्मा। बहूनि यस्य नामानि नरस्य स्युः कथञ्चन ततः पश्चाद्भवं नाम ग्राह्यं स्वरविशारदैः। तथा च लम्पटाचार्यः—यदा स्वरादिकं नाम तदा ग्राह्यं पुरोऽक्षरम्। देशे ग्रामे पुरे हर्म्ये नरे नामादिवर्णतः॥ वर्णस्वरोद्भवं तेषां फलं सम्यक् प्रतिष्ठितम्। स्वरस्य मात्रा सञ्ज्ञोक्ता न वर्णत्वं तु यामले॥ मुकुन्दविजयेऽपि—आद्यो युक्ताक्षरे नाम्नि पुरोवर्णः स्वरादिकं इति। तथा च वर्गी शर्मा पर्शी कन्यौ ज्ञेयाविति परस्परम्। उभौ तुल्यफलौ भिन्नस्वरस्याधः स्थितावपि। इति वर्णस्वरः॥ ११-१४॥

श्लोक ११–१४ को समझने के लिये आचार्य ने चक्र बनाने का संकेत दिया है, उसे देखकर विषय अतिस्पष्ट हो जाता है। अकारादि पाँचों स्वरों के नीचे क्रम से आरम्भकर ह पर्यन्त वर्णों को तिर्यक् क्रम से ३५ कोष्ठों में लिखै किन्तु ङ ञ ण वर्णों को न लिखे। मनुष्य के नाम का प्रथम वर्ण जिस स्वर के नीचे हो वही उसका वर्णस्वर होता है। ङ ञ ण वर्णों को नहीं कहा गया है क्योंकि प्रायः मनुष्य के नाम के आदि में ये वर्ण नहीं पाये जाते हैं यदि कहीं किसी के नाम के आदि में हों तो इनके स्थान में क्रम से ग ज ड वर्णों को समझना चाहिये अर्थात् ग ज ड वर्णों के जो वर्णस्वर हों वही उन वर्णों के होंगे। यदि नाम के आदि में संयुक्ताक्षर हो तो वहाँ संयुक्ताक्षर में पहला वर्ण लेना चाहिये ऐसा ब्रह्मयामल में कहा है। जैसे सदानन्द के नाम में आदि वर्ण स है वह चक्र में ए स्वर के नीचे है अतः सदानन्द का एकार वर्णस्वर है। इसी प्रकार श्रीपति के नाम में संयुक्ताक्षर का प्रथम वर्ण श है और वह इकार के नीचे है इसलिये श्रीपति का इकार वर्णस्वर है। वर्णों में विशेष—स्वरशास्त्र में ब व, श स, ष ख, ड ज, ये सजातीय माने जाते हैं। इतिवर्णस्वरः ॥ ११–१४ ॥

यदि एक व्यक्ति के दो तीन नामोपनाम हों तो कौन नाम से स्वर विचारा जाय? इसका यही समाधान शास्त्र में है प्रसुप्तो भासते येन येनागच्छति शब्दितः। अर्थात् सोया हुआ पुरुष जिस नाम के उच्चारण से जागरूक हो उसके उसी नाम से स्वर विचारना चाहिए।

वर्णस्वरचक्रम्

| बाल | कुमार | युवा | वृद्ध | मृत |
|---|---|---|---|---|
| अ | इ | उ | ए | ओ |
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श | ष | स | ह |

मृतस्वराद्बली बालो बालाद् वृद्धस्वरो बली ।
वृद्धान् कुमारो बलवान् कुमारात्तरुणो बली ॥ १ ॥
शाक्रपुर्ये तथा हस्तश्चिश्रेष्ठ द्वात्रिंशाङ्किकम् ।
इन्द्रभं च गजा मन्र स्त्रा वर्षं च मानकम् ॥ २ ॥
मार्पं पूर्णं तथाऽऽश्लेषा गजत्राणा अयने पला ।
वह्निरद्राणवह्निश्च नेत्रे ऋतुपलानि च ॥ ३ ॥
रामा रूप गजा धर्मा मासे मान प्रकीर्त्तितम् ।
नवपूर्णनवेदा पक्षभागप्रमाणकम् ॥ ४ ॥
ऋत्यग्निहि भवेन्मान दिनमान क्रमेण च ।
रामह्नो घटिका माने त्वन्तरोदयगे स्वरे ॥ ५ ॥

द्वादशवार्षिकान्तरोदयपलानि इन्द्रभमित्यादि १४१३८१८ । वार्षिकान्तरोदये ११७८८/८ । अयनान्तरोदये ५८६०६ । ऋत्वन्तरोदये १३५६३ । मासान्तरोदये ६८१८ । पक्षान्तरोदये ५६०९ । दिनान्तरोदये ३८७ । घट्यन्तरोदये ३० पलानि इति । इत्यधिक पाठ ।

अथ ग्रहस्वराः ।

**अस्वरे मेषसिंहालि इः कन्यायुग्मकर्कटाः ।**
**उकारस्य धनुर्मीनावेस्वरस्य तुलावृषौ ॥ १५ ॥**
**ओकारे मृगकुम्भौ च राशीशाश्च ग्रहस्वराः ।**
**स्वराधः स्थापयेत्खेटान् राशेर्यो यस्य नायकः ॥ १६ ॥**
**भौमशुक्रज्ञचन्द्रार्कबुधशुक्रारमन्त्रिणः ।**
**मौरिसौरी तथा जीवो मेषादीनामधीश्वराः ॥ १७ ॥**

अस्वरो इति । अस्वरस्याध मेषसिंहालि मेषसिंहवृश्चिका लेखनीया । इस्वरस्याध स्त्रीयुग्मकर्कटा । उस्वरस्याध—धनुर्मीनौ । एस्वरस्याध तुलावृषा । ओस्वरस्याध मृगकुम्भौ । एवं चक्रे आलिख्य यस्य राशेर्योऽधिपस्तं तदधस्तालिखेत् । एवं यस्य स्वरस्याधो योऽस्ति तस्य स स्वरो ज्ञेय इत्यर्थ ॥१५॥ ॥१६॥ भौमेति । स्पष्टम् । अथ ग्रहस्वरोदाहरणम् । देवदत्तस्य नाम्नि देकारवर्णः स च दे० दो० च० ची० रेवती नक्षत्रस्य चतुश्चरणानां मध्ये प्रथमश्चरण । रेवतीनक्षत्रेण मीनराशि स च उकारस्वरस्याध । मीनराशेरपि गुरु गुरुरुकारस्वामी अतो देवदत्तस्य ग्रहस्वर उकार । एवं सदानन्दस्य नाम्नि सकारवर्णः स च गोसासीसूशतभिषनक्षत्रस्य चतुर्णां चरणानां मध्ये द्वितीयश्चरण कुम्भराश्यात्मकस्तस्य स्वामी शनि ओकारस्वराधःस्थस्तेन सदानन्दस्य ओकार स्वर एव ग्रहस्वर इति एवं सर्वत्र योज्यम् । इति ग्रहस्वराः ।

किस स्वर के नीचे कौन सी मेषादि राशि है—इसका स्पष्टीकरण निम्न भाँति है—अकारस्वर के नीचे मेष, वृश्चिक राशि, इकार के नीचे मिथुन और कर्क, उकार के नीचे धन, मीन, एकार के नीचे तुला, वृष और ओकार के नीचे मकर, कुम्भ राशि को लिखना चाहिये। १५।१६। मेषादि राशियों के क्रम से भौम, शुक्र, बुध, चन्द्रमा, सूर्य, बुध, शुक्र, भौम, गुरु, शनि, शनि और गुरु स्वामी हैं। इन्हीं स्वरों के नीचे स्थापित की हुई राशियों के स्वामियों को जो जिस राशि का स्वामी हो उसे रखना चाहिये। ऐसा न्यास करने से जो ग्रह जिस स्वर के नीचे हो वही उसका स्वर होता है ॥१७॥ जैसे देवदत्त के नाम का प्रथम वर्ण द है और वह रेवती नक्षत्र के प्रथम चरण में है। रेवती नक्षत्र की मीन राशि है, मीन राशि उकार स्वर के नीचे है और मीन का स्वामी गुरु है अतः देवदत्त का उकार ग्रह स्वर जिसका स्वामी गुरु हुआ। इसी प्रकार अन्यत्र भी समझना शेष चक्र में स्पष्ट है ॥ १७ ॥

ग्रहस्वरचक्रम्

| अ | इ | उ | ए | ओ | स्वरा |
|---|---|---|---|---|---|
| १ | ३ | ९ | २ | १० | राशय |
| ५<br>८ | ४<br>६ | १२ | ७ | ११ | |
| सू<br>म० | च<br>बु | बृ | शु | श | स्वामिन |
| बाल | कुमार | युवा | वृद्ध | मृत | अवस्था |

अथ जीवस्वरम्—

षोडशाक्षरोऽस्वर्ग. स्यात्कादिवर्णास्तु पञ्चकम्।
चतुर्वर्गो यशो वर्गो सख्या वर्षेषु कीर्त्तिता. ॥ १८ ॥
नाग्निवर्णस्वरा ग्राह्या वर्गाणां वर्णसख्यया।
पिण्डिताः पञ्चभिर्भक्ताः शेष जीवस्वर विदुः ॥ १९ ॥

१ षोडशाक्षरवर्गं स्यादित्यपि पाठः।
अवर्गादष्टवर्गाणां वर्णसख्यास्तु नाग इत्यधिकः पाठः।

षोडशाक्षरोऽवर्गः स्यादिति । अवर्गो अकारादारभ्य अः पर्यन्त षोडशाक्षर षोडशसंख्याकः । कादिवर्गाः कवर्गादारभ्य पवर्गपर्यन्त प्रत्येकं पञ्चसंख्यकाः । यशौ यवर्गशवर्गौ प्रत्येकं चतुरक्षरौ वर्गेष्विय संख्या प्रकीर्तिता ॥१८॥ नाम्नीति । नाम्नि वर्णस्वरा कवर्गादिष्वेव स्वरा अकारादारभ्य अः पर्यन्ता वर्णाना वर्णसंख्यया ग्राह्या । एवं संख्या पिण्डिता एकीकृत्य पञ्चभिर्भक्ता शेषं तस्य जीवस्वरं विदु ॥ १९ ॥ यथोदाहरणम् । देवदत्तस्य नाम्नि दकारस्य त्रि संख्या ३, दकारोपरि एकारस्य एकादश संख्या ११, वकारस्य चतु संख्या ४, वकारान्तर्भूताऽकारस्यैकसंख्या १, द्वितीयदकारस्य त्रिसंख्या ३, तदन्तर्गताऽकारस्यैकसंख्या १, प्रथमतकारस्यैकसंख्या १, द्वितीयतकारस्यैक संख्या १, द्वितीयतकारान्तर्गताऽकारस्यैकसंख्या १, एषा योग षड्विंशति २६, स्वरमात्रासंज्ञोक्ता पञ्चभक्ते शेषमेकाङ्कः तेन देवदत्तस्य जीवस्वरोऽकार । एवं सदानन्दस्य योगसंख्या २४ पञ्चभक्ते शेषम् ४ तेन सदानन्दस्यापि जीवस्वर ॥१९॥

आचार्य किसी भी नाम के पुरुष का जीव स्वर कैसे जाना जाता है इसका स्पष्टीकरण उदाहरण से कर रहा है। अवर्ग अर्थात् अ से आरम्भकर अः पर्यन्त १६

जीवस्वरचक्रम्

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अ<br>१ | आ<br>२ | इ<br>३ | ई<br>४ | उ<br>५ | ऊ<br>६ | ऋ<br>७ | ॠ<br>८ | लृ<br>९ | ॡ<br>१० | ए<br>११ |
| ऐ<br>१२ | ओ<br>१३ | औ<br>१४ | अं<br>१५ | अः<br>१६ | क<br>१ | ख<br>२ | ग<br>३ | घ<br>४ | ङ<br>५ | च<br>१ |
| छ<br>२ | ज<br>३ | झ<br>४ | ञ<br>५ | ट<br>१ | ठ<br>२ | ड<br>३ | ढ<br>४ | ण<br>५ | त<br>१ | थ<br>२ |
| द<br>३ | ध<br>४ | न<br>५ | प<br>१ | फ<br>२ | ब<br>३ | भ<br>४ | म<br>५ | य<br>१ | र<br>२ | ल<br>३ |
| व<br>४ | श<br>१ | ष<br>२ | स<br>३ | ह<br>४ | | | | | | |

अक्षर होते हैं। तथा कवर्ग आदि पवर्ग पर्यन्त प्रत्येक ५ अक्षरों के होते हैं, एवं यवर्ग और शवर्ग प्रत्येक ४ अक्षरों के होते हैं ॥ १८ ॥ नाम में जितने वर्ण और स्वर हों उनके अंकों को एकत्र कर अर्थात् योगकर योग में पाँच ५ से भाग देने से जो शेष बचे उसके तुल्य स्वर उस पुरुष का जीवस्वर होता है ॥१९॥ जैसे—देवदत्त के नाम में द, ए, व, अ, द, अ, त्, त, अ, इतने वर्ण और स्वर हैं इनकी संख्या क्रम से

३+१,१+४+१+३+१+१,+१ यह हुए इनका योग २६ हुआ पाँच से भाग देने से शेष १ बचा इसलिये देवदत्त का प्रथम स्वर अकार जीवस्वर हुआ। यहाँ वर्णों की संख्या वर्ण की संख्या से ही लेनी चाहिये। इसी प्रकार सदानन्द के नाम की संख्या २४ हुई इसमें पाँच से भाग देने से शेष ४ बचा इसलिये सदानन्द का जीव स्वर ए हुआ इसी प्रकार सर्वत्र समझना चाहिए ॥ १८–१९ ॥

अथ राशिस्वरम्—

मेषवृषावकारे च मिथुनाद्याः षडंशकाः।
मिथुनांशत्रयं चैवमिकारे सिंहकर्कटौ ॥ २० ॥
कन्या तुला उकारे च वृश्चिकाद्यास्त्रयोंऽशकाः।
एकारे वृश्चिकान्त्यांशाश्चापः षट् च मृगादिमाः ॥ २१ ॥
अंशास्त्रयो मृगस्यान्त्याः कुम्भमीनौ तथौस्वरौ।
एवं राशिस्वराः प्रोक्ता नवांशैकक्रमोदयाः ॥ २२ ॥

मेषवृषौ इति। एकस्मिन् राशौ नव नवमांशा इति तु प्रसिद्धमेव। तत्र मेषस्य नव वृषस्य नव मिथुनस्य षट् एवं चतुर्विंशतिसंख्याकनवांशानाम् तथा नक्षत्रगणनया अश्विनीत आर्द्रान्तं यावत् नक्षत्राणां स्वामी अकारः। तथा मिथुनस्य शेष त्रिनवांशकात् सिंहस्य नव कर्कस्य नव एवमेकविंशतिसंख्याकनवांशानाम् तथा पुनर्वसुत आरभ्योत्तराफाल्गुन्येकचरणपर्यन्तानां नक्षत्राणां च स्वामी इकारः। एवं कन्यायां नव तुलायां नव तथा च वृश्चिकराशेरारम्भ अंशत्रयाणां त्रयोऽशास्तेषां तथोत्तरफाल्गुन्यो द्वितीयचरणादारभ्यानुराधा नक्षत्रस्य चरणद्वयपर्यन्तानामीश उकारः। एवं वृश्चिकराशेः शेषषडंशस्य धनराशेस्तथा मकरस्य षडंशानां तथाऽनुराधानक्षत्रस्य तृतीयचरणादारभ्य श्रवणतृतीय चरणपर्यन्तानामंशानामधिप एकारः। एवं मकरराशेः शेषत्र्यंशानां कुम्भमीन राश्योः यावत्तथा श्रवणनक्षत्रचतुर्थचरणादारभ्य रेवत्यन्तानामंशानां स्वामी ओकारः एवं नवांशक्रमेण राशिस्वराः प्रोक्ता इति राशिस्वराः ॥ २०–२२ ॥

१२ राशियों के १२×९=१०८ नवमांश होते हैं, किस नवमांश में कौन स्वर होता है सोदाहरण इसका स्पष्टीकरण किया जाता है—प्रत्येक राशियों में ९ नवमांश होते हैं। इसके अनुसार मेष वृष और मिथुन राशि के आदि में [illegible] नवमांश अर्थात् २४ नवमांशों का स्वामी अकार है, मिथुन राशि का शेष ३ नवमांश और कर्क, सिंह राशि का स्वामी इकार, कन्या तुला के सम्पूर्ण नवमांशों और वृश्चिक राशि के आदि के ३ नवमांशों का स्वामी उकार, वृश्चिक राशि के शेष ६ नवमांशों तथा धन और मकर के आदि में ६ नवमांशों का स्वामी एकार तथा मकर के शेष ३ नवमांशों

तथा कुम्भ और मीन के सम्पूर्ण नवमांशों का स्वामी ओकार है। इस प्रकार नवांश के क्रम से राशि स्वरों को कहा है ॥ २०–२१ ॥

उदाहरण—जैसे देवदत्त के नाम का आदि अक्षर दे रेवतीनक्षत्र के प्रथम चरण का है जिससे मीन राशि होती है, मीन का स्वामी ओकार है अतः देवदत्त का राशि स्वर ओकार है। एवं सदानन्द की कुम्भ राशि है इसलिये सदानन्द का भी ओकार राशिस्वर हुआ। इसी प्रकार सर्वत्र समझना चाहिए।

राशिस्वरचक्रम्

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| मे ९ | मि ३ | क ९ | तु ६ | म ३ |
| वृ ९ | क ९ | तु ९ | ध ९ | कु ९ |
| मि ६ | सिं ९ | वृ ३ | म ६ | मी ९ |

अथ नक्षत्रस्वर —

अकारे सप्त ऋक्षाणि रेवत्यादिक्रमेण च ।
पञ्च पञ्च इकारादावेवमृक्षस्वरोदयः ॥ २३ ॥

अकारे इति। अकारे अकारस्वराध रेवत्यादि आर्द्रान्त सप्तनक्षत्राणि लेखनीयानि। एवं इकाराध पञ्चपुनर्वसुत पूर्वाफाल्गुनीपर्यन्तम्, उकाराध

नक्षत्रस्वरचक्रम्

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| रे अ | पुन पु | उ ह | अनु | श्र |
| भ कृ | श्ले म | चि स्वा | ज्ये मू | ध श |
| रो मृ | पू | वि | पूषा | पूभा |
| आ | | | उषा | उभा |

उत्तराफाल्गुनीत विशाखापर्यन्त इकाराध अनुराधात उत्तराषाढान्त

यावत् ओकाराध श्रवणनक्षत्रमारभ्योत्तराभाद्रपद यावत्पञ्च ऋक्षाणि लेख्यानि। एव कृते पुरुषस्य नाम वा जन्मनक्षत्र यत्स्वराधोऽवतिष्ठते सस्वर स्तस्य नक्षत्रस्वर इति। यथा देवदत्तस्य रेवती नक्षत्र तेन देवदत्तस्य नक्षत्र स्वरोऽकार। एव सदानन्दस्य ओकारो नक्षत्रस्वर ॥ २३॥

भावार्थ चक्र से स्पष्ट है।

अथ पिण्डस्वरम्—

**नाम्नि वर्णस्वरात्संख्या संख्या मात्रास्वरात्तथा।**
**पिण्डे शरहृते शेषे पिण्डस्वर इहोच्यते ॥ २४ ॥**

नाम्नि वर्णस्वरान्मात्रास्वराच्च या सख्या तथा नामवर्णाद् जीवस्वरवशात् या सख्या सा पृथक् पृथक् धर्त्तव्या। सख्यात्रयमेकीकृत्य पञ्चभिर्हृते शेष पिण्डस्वरो भवति। २४। यथा देवदत्तस्य वर्णस्वरचक्रे द ५, ए ४, व १, अ १, द ५ अ १ त ३ त ३ अ १ एतेषामैक्यम् २४ शरहृते शेष ४ तेन देवदत्तस्य पिण्डस्वर एकार। ॥ २४ ॥

पिण्डस्वर जानने की विधि का स्पष्टीकरण किया जा रहा है। पुरुष आदि के नाम के वर्ण स्वर मात्रा आदि से उनके चक्रों से उनकी सख्याओं को एकत्र कर ५ का भाग देने से जो शेष बचे वही पिण्डस्वर होता है। जैसे देवदत्त के नाम में द ५, ए = ४ व = १, अ = १, द = ५, अ = १, त = ३, त = ३, अ = १ इन सभी का योग २४ हुआ इसमें ५ से भाग देने पर ४ शेष बचा इसलिए देवदत्त का एकार पिण्डस्वर हुआ ॥ २४ ॥

अथ योगस्वर—

**मात्रादिस्वरभेदेन स्वरानुत्पाद्य नामत।**
**योगे शरहृते शेषे योगस्वर इहोच्यते ॥ २५ ॥**

मात्रादिरिति—मात्रा आदिर्येषा ते मात्रावर्णग्रहजीवराशिनक्षत्रपिण्डस्वरा स्तेषा या सख्या सा एकीकृत्य पञ्चभिर्हृते यदवशिष्ट तत योगस्वर इति। यथा देवदत्तस्य मात्रास्वर एकारस्तस्य सख्या ४, वर्णस्वर ओकारस्तस्य सख्या ५, ग्रहस्वर उकारस्तस्य सख्या ३, जीवस्वर अकारस्तत्सख्या १, राशिस्वर ओकारस्तत्सख्या ५, नक्षत्रस्वर, अकारस्तत्सख्या १, पिण्डस्वर एकार स्तत्सख्या ४ एषा योग २३ शरहृते शेष ३ तेन देवदत्तस्य योगस्वर उकार। इति योगस्वर ॥ २५ ॥

योग स्वर ज्ञान से योगाभ्यास करना चाहिए अत योग का स्वर जानने की आचार्य की शैली निम्नभाँति है—नाम से उत्पन्न मात्रादि (मात्रा, वर्ण, ग्रह, जीव

राशि, नक्षत्र, पिण्ड ) स्वरों के अंकों के योग में ५ से भाग देने से जो शेष हो उसीके तुल्य स्वरों में से योगस्वर होता है। जैसे देवदत्त के नाम में क्रम से मात्रास्वर की ४, वर्णस्वर की ५, ग्रहस्वर की ३, जीवस्वर की १, राशिस्वर की ५, नक्षत्रस्वर की १, पिण्डस्वर की ४ संख्यायें होती हैं। इन सभी का योग २५ हुआ इसमें ५ भाग देने से ३ शेष बचा अतः देवदत्त का तीसरा उकार योगस्वर हुआ ॥ २५ ॥

इति मात्राद्यष्टस्वराध्यायो द्वितीयः ।



# अथ द्वादशवार्षिकादिस्वराध्यायः

तत्र द्वादशाब्दिकस्वर —

प्रोक्ता नैसर्गिका ह्यष्टौ मात्राद्या नामजाः स्वराः ।
एतेषामुदयान्वक्ष्ये द्वादशाब्दादिकालजान् ॥ १ ॥
प्रभवादिक्रमेणैषां स्वराणामस्वरादिकम् ।
उदयो द्वादशाब्दानामेकैकं द्वादशाब्दिकः ॥ २ ॥
अस्यान्तरोदयो वर्षमेकं मासो दिनद्वयम् ।
लोकाब्धिनाडिकाः प्रोक्ता अष्टत्रिंशत्पलानि च ॥ ३ ॥

प्रोक्ता इति । नामजा स्वरा नामत उत्पन्ना नैसर्गिका, मात्राद्या अष्टौ स्वरा प्रोक्ता । एतेषां स्वराणां द्वादशाब्दादि कालजान् वर्षायनर्तुमासपक्षतिथिदण्डजान् बालादिव्यवहारसंज्ञितान् वक्ष्ये । प्रभवादि इति । तथा द्वादशाब्दानां प्रभवादिक्रमेण षष्टिसंवत्सराणां मध्ये द्वादश द्वादशाब्दके प्रत्येकमकारादयः पञ्चस्वरा उदयन्ति । यथा प्रभवादि द्वादशवर्षे अकारोदय । ततो द्वादश द्वादशभिः चतुर्णामिकारादीनामुदय । तत्र प्रभवादि संवत्सराणामानयनार्थं रत्नमालाया श्रीपतिवाक्यम् यथा—शकेन्द्रकाल पृथगाकृतिघ्नः शशाङ्कनन्दाश्वियुगैः समेतः । शराद्रिवस्विन्दुहृतः स लब्धः षष्ट्याप्तशेषे प्रभवादयोऽब्दाः ॥ उदाहरणम् । संवत् २०१६ शके १८८१ चैत्रशुक्लप्रतिपदि । शकाब्द १८८१ द्विस्थ । द्वाविंशत्या २२ गुणिते जातम् ४१३८२ शशाङ्कनन्दाश्वियुगैः ४२९१ युते जातम् ४५६७३ अथ शराद्रिवस्विन्दुभिर्भक्ते लब्ध पर्वाणि २४ शेष ६७३ द्वादशभिः संगुण्य भक्ते लब्ध मासा ४ शेष ५७६ त्रिंशता संगुण्य भक्ते लब्ध दिनादि ९ शेष ४०५ षष्ट्या संगुण्य भक्ते घटी १२ शेष १८०० पुनः षष्ट्या संगुण्य भक्ते लब्धानि पलानि ५७ इमानि पृथक् स्थितशकमध्ये युतानि जातानि १९०५ वर्षाणि ४ मासा ९ दिनानि १२ घटी ५७ पलानि । वर्षस्थाने षष्ट्या हृते शेष ४५ प्रभवादि गणनया गत विरोधकृत् पर वर्तमान नलस्य परिधाविसंवत्सरस्य मासादिक ४ मा ४ दि ९ घ १२ प ५७ । अत्र द्वादशाब्दिकस्वरज्ञानार्थं द्वादशभिर्हृते लब्ध ३ गता स्वरा एकारस्य एकार स्वरस्य गतवर्षाणि ९।४।९।१२।५७ शोभनाख्यसंवत्सरमारभ्य आनन्दान्तं यावत् द्वादशवर्षपर्यन्तं एकारस्योदयो भवेत् । तेन सम्प्रति आनन्दस्य नामतः योगजस्वर अकारस्तद्द्वादशाब्दिकस्वरो शुद्धस्तस्य योगस्वरोऽस्ति फलानाम् सिद्धिः । अथ वर्तमानसंवत्सराद्द्वादशवर्षेष्वेकारोदयस्तदन्तर्दशा

फलमाह वर्षमेकमित्यादि तच्चक्रे द्रष्टव्यम्। अन्तर्दशाभागकरणं दिनचर्याया व्याख्यातम् ॥ १-३ ॥

द्वादशाब्दिकस्वरचक्रम्

| अ | इ | उ | ए | ओ | |
|---|---|---|---|---|---|
| प्रभव | प्रमाथी | खर | शोभन | राक्षस | संवत्सर |
| १२ | १२ | १२ | १२ | १२ | |
| १ | १ | १ | १ | १ | व |
| १ | १ | १ | १ | १ | मा |
| २ | २ | २ | २ | २ | दि |
| ४३ | ४३ | ४३ | ४३ | ४३ | घ |
| ३८ | ३८ | ३८ | ३८ | ३८ | प |

अथान्तर्दशानयनोपाय। अथ वर्त्तमान द्वादशाब्दिकस्य ए स्वरस्य भुक्तवर्षादिकम्। ६।४।६।१९।४७ अस्य पला १८१८६१७७। अन्तरवर्षादिकम् १।१।२।४३।३८ अस्य पला १८१३८१८। ततोऽनुपात यद्येतैः पलैरेकस्वरोदयस्तदा वर्त्तमानस्य एस्वरस्य भुक्तपलैरेभि १८१८६१७७ पलै किमिति। लब्ध गतस्वरा ८ एतेनात्र एकारस्वरगणनया अस्वरस्यान्तर्दशा वर्त्तते। वर्त्तमानान्तर्दशाया भुक्तपलानि ८१८७३३ भोग्यपलानि ५६६०८५। आभ्या भुक्तभोग्यदिनानयन कार्यम्।

कौन स्वर किस समय से कब तक रहता है, एक ही स्वर के समय में अन्य स्वरों की भी स्थिति होती है इसी का स्पष्टी करण नाम के अनुसार मात्रास्वर आदि आठ नैसर्गिक ( स्वाभाविक ) स्वरो को कहा। अब इनका द्वादशाब्दिक काल के अनुसार उदय को कह रहा हूँ। इन स्वरो का प्रभवादि बारह २ संवत्सरों के अनुसार बारह २ वर्ष का उदय होता है। शेष चक्र से स्पष्ट है। १२ वर्ष में ११ स्वरों का उदय होता है अत एक स्वर का १२ में भाग वर्षादि १११ १ वर्ष शेष १ × १२ = १२ मास-११ = १ महीना शेष १ मास × ३० = ३० दिन-११ = २ शेष ८ दिन × ६० = ४८० घटी-११ = ४३ घटी इत्यादि आगे भी समझना ॥ १-३ ॥

अथ वार्षिकस्वरचक्रम्

प्रभवाद्यब्दमेकैकमुदयस्त्वस्वरादिकः ।
द्वादशाब्दस्य वर्षाणा तद्भुक्तिर्वार्षिके स्वरे ॥ ४ ॥

योग इति। योगे लब्धे स्वकर्मतः स्वव्यापारात्। पिण्डे द्विसंख्यालाभे शरीरात्स्वकीयादेव। नक्षत्रे त्रिसंख्यालाभे सुहृज्जनात्। राशौ चतुःसंख्यालाभे स्वकुलोद्भवजनात्। जीवे पञ्चसंख्यालब्धे स्ववित्तात्। ग्रहतो षट्संख्यालाभे रिपोः शत्रुजनात्॥ वर्णे सप्तसंख्यालाभे स्वस्वामितः। मात्रायामष्टसंख्या लब्धे स्त्रीजनात् फलं शुभमशुभं वा भवतीति विद्वान् वदेत्॥ ९७–९८॥

पूर्वोक्त प्रकार से १ शेष में अपने व्यापार से, २ शेष में अपने शरीर से, ३ शेष में अपने मित्रों से, ४ शेष में अपने कुल से, ५ शेष में अपने धन से, ६ शेष में अपने शत्रुओं से, ७ शेष में अपने स्वामी से और ८ शेष में स्त्री से शुभ या अशुभ फल को कहना चाहिये॥ ९७–९८॥

उदाहरण—संवत् २०१६ शके १८८१ चैत्र शुक्ल प्रतिपद् १ गुरुवार घटी ९ पल २८। सूर्य ११।२५।५६ रा अ क है। इस दिन सदानन्द के दिनचर्या का विचार करना है। अतः नियम के अनुसार सदानन्द के मात्रा स्वर आदि इस प्रकार है।

१—मात्रास्वर = अकार
२—वर्णस्वर = एकार
३—ग्रहस्वर = ओकार
४—जीवस्वर = एकार
५—राशिस्वर = ओकार
६—नक्षत्रस्वर = ओकार
७—पिंडस्वर = इकार
८—योगस्वर = अकार

इन स्वरों से उत्पन्न कालस्वर अन्तरोदय के सहित इस प्रकार हैं

—घटीस्वर इकार कुमार। अंतरोदय-एकार वृद्ध
—तिथिस्वर अकार युवा। अंतरोदय-अकार युवा
—पक्षस्वर इकार युवा। अंतरोदय-इकार युवा
—मासस्वर उकार मृत। अंतरोदय एकार बाल
—ऋतुस्वर-अकार कुमार। अंतरोदय एकार मृतस्वर
—अयनस्वर-इकार युवा-अंतरोदय-इकार युवा
—वार्षिक-ओकार वृद्ध। अंतरोदय-एकार युवा
—द्वादश वार्षिक एकार वृद्ध-अंतरोदय में इकार वृद्ध

शुभ पंक्ति

| स्वर | | | वि स |
|---|---|---|---|
| वार्षिकांतरोदय | एकार | युवा | = ४ |
| अयनस्वर | इकार | युवा | = ४ |
| अयनांतरोदयस्वर भी | इकार | युवा | = ४ |
| ऋतुस्वर | अकार | कुमार | = ४ |
| मासान्तरोदय बालोत्तरार्ध | एकार | | = ४ |
| नक्षत्रस्वर | इकार | युवा | = ४ |
| अंतरोदय | इकार | युवा | = ४ |
| तिथिस्वर | अकार | युवा | = ४ |
| तिथ्यन्तरोदय | अकार | युवा | = ४ |
| घटीस्वर | इकार | कुमार | = ४ |
| इनका योग | | | = ४० |

अशुभ पंक्ति

| स्वर | | | वि स |
|---|---|---|---|
| द्वादश वार्षिक स्वर | एकार | वृद्ध | = ४ |
| ,, ,, अंतरोदय | इकार | वृद्ध | = ४ |
| वार्षिक | ओकार | वृद्ध | = ४ |
| ऋतुस्वरांतरोदय | एकार | मृत | = ४ |
| मासस्वर | उकार | मृत | = ४ |
| घटीस्वरांतरोदय | एकार | वृद्ध | = ४ |
| इनका योग | | | २४ |

शुभयोग ४० से अशुभयोग २४ को घटाने से शेष १६ बचा इसे २० से गुणकर ६४ का भाग देने से लब्धि ५ और शेष ० हुआ अत उक्त दिन सदानन्द को स्त्री द्वारा लाभादि शुभ फल होंगे ॥

## अथ स्वरप्रशंसा

गुह्याद्गुह्यतरं सारमप्रकाश्यं प्रकाशितम् ।
इद स्वरोदयज्ञान ज्ञानिना मस्तके स्थितम् ॥ १ ॥
सूक्ष्मात्सूक्ष्मतरं ज्ञानं सुबोधं सत्यप्रत्ययम् ।
आश्चर्यं नास्तिके लोके आधारमास्तिके जने ॥ २ ॥
दुष्टे च दुर्जने क्षुद्रे ह्यसत्ये गुरुतल्पगे ।
हीने सत्वे दुराचारे स्वरज्ञान न दीयते ॥ ३ ॥
शान्ते शुद्धे सदाचारे गुरुभक्तैकमानसे ।
दृढचित्ते कृतज्ञे च देय एव स्वरोदयः ॥ ४ ॥

गोप्य से भी गोप्य अप्रकाश्य इस स्वरोदय ज्ञान को जोकि ज्ञानियों के मस्तक में था उसे प्रकाशित किया। सूक्ष्म से भी सूक्ष्म ज्ञान सुबोध सत्य तथा नास्तिकों को आश्चर्यान्वित और आस्तिकों के लिये आधारस्वरूप है। किन्तु यह स्वरज्ञान दुष्ट, दुर्जन, क्षुद्र, गुरुद्रोही, झूठे और दुराचारी को नहीं देना चाहिये जो शान्त, शुद्ध, सदाचारी, गुरुभक्त, कार्य करने में दृढप्रतिज्ञ, और कृतज्ञ हो उसी को स्वरज्ञान देना चाहिये ॥ १–४ ॥

इति स्वरप्रशंसा ।

## अथ हंसचारः

अथान्यत्सम्प्रवक्ष्यामि शरीरस्थं स्वरोदयम् ।
हंसचारस्वरूपेण येन ज्ञानं त्रिकालजम् ॥ १ ॥
कुण्डलिनी महाशक्तिर्नाभिस्थाऽस्तिस्वरूपिणी ।
ततो दशोर्ध्वगा नाड्यो दश चाधोगतास्तत ॥ २ ॥
द्वे द्वे तिर्यग्गते नाड्यौ चतुर्विंशतिसंख्यया ।
कुण्डलिन्या महाशक्तेर्मूलमार्गा भवन्त्यमी ॥ ३ ॥

तेभ्यः सूक्ष्ममुखा नाड्यः शरीरस्यातिपोषिकाः ।
शतानि सप्त जायन्ते सप्तोत्तराणि संख्यया ॥ ४ ॥
प्रधाना दशनाड्यस्तु दशवायुप्रवाहिकाः ।
नामानि नाडिकानां च वातानां च वदाम्यहम् ॥ ५ ॥

अथेति । अथानन्तरं अन्यत् शरीरस्थं शरीरसञ्चारिणं स्वरोदयं सम्प्रवक्ष्यामि । कथमिति जिज्ञासायां हंसचारस्वरूपेण । येन हंसस्वरूपेण त्रिकालज्ञं स्वरोदयज्ञानं जानन्तीति । कुण्डलिनीति । शक्तीनां मध्ये महाशक्तिः कुण्डलिनीनाम्नी कुण्डलाकारा अहिस्वरूपिणी दीर्घतया सर्पाकारा देहिनां नाभिस्था नाभिस्थाने देहस्थानां नाडीनां मूलभूता विद्यते । ततस्तस्याः कुण्डलीतः दश नाड्य ऊर्ध्वगा दश चाधोगताः । द्वे द्वे इति । द्वे द्वे नाड्यौ तिर्यग्गते स्तः । एवमत्र चतुर्विंशतिसंख्या नाड्यो कुण्डलिन्या महाशक्ते मूलमार्गा भवन्ति । ताभ्य इति । ताभ्यः चतुर्विंशतिकाभ्यः सप्तोत्तराणि सप्ताधिकानि सप्तशतानि नाड्यो जायन्ते ताश्च नाड्यः सूक्ष्ममुखा शरीरस्यातिपोषिका । प्रधानेति । तासां मध्ये दश नाड्यः प्रधाना तास्तु दशसंख्याकवायुप्रवाहिका । तासां दशनाडीनां दशसंख्याकवायूनां च नामानि अहं वदामि ॥ १–५ ॥

इसके बाद मैं शरीरस्थ नाडीरूप, स्वरों को हंसचार के अनुसार कहूँगा जिसके ज्ञान से त्रिकाल का ज्ञान हो जाता है। शरीर के सभी शक्तियों में बड़ी एक महाशक्ति कुण्डलिनी नाम की है जो कि सर्प के समान लम्बी और कुण्डल के आकार की है और जीवमात्र के नाभिस्थान में रहती है। इसी से लगी हुई दश नाड़ियाँ ऊपर को और दश नीचे को गई हैं। और दो दो नाड़ियाँ पार्श्व में गई हैं। इस प्रकार हुए २४ नाड़ियाँ हैं। ये नाड़ियाँ कुण्डलिनी महाशक्ति के मूल में उत्पन्न हैं। इन २४ नाड़ियों से भी सूक्ष्म ७०७ नाड़ियाँ हैं जोकि शरीर का अत्यन्त पोषण करने वाली हैं। इनमें प्रधान दश ही नाड़ियाँ हैं जोकि दश प्रकार के वायु को चलाती हैं। इन दश नाड़ियों का और दश वायुओं का नाम कहता हूँ ॥ १–५ ॥

इडा पिङ्गला सुषुम्ना गांधारी हस्तिजिह्विका ।
पूषा यशा च श्यूषा च कुहुः शङ्खिनिका तथा ॥ ६ ॥
प्राणोपान समानश्च उदानो व्यान एव च ।
नाग, कूर्म कृकलश्चैव देवदत्तो धनञ्जयः ॥ ७ ॥
प्रकटो वायुसञ्चारो लक्ष्यते देहमध्यतः ।
इडा-पिङ्गला-सुषुम्नाभिर्नाडीभिस्तिसृभिर्बुधैः ॥ ८ ॥

इडानाडीस्थितश्चन्द्रः पिङ्गला भानुवाहिनी ।
सुषुम्ना शम्भुरूपेण शम्भुर्हंसस्वरूपकः ॥ ९ ॥
हकारो निर्गमे प्रोक्तः सकारस्तु प्रवेशने ।
हकारः शम्भुरूपेण सकारः शक्तिरुच्यते ।
शक्तिरूपस्थितश्चन्द्रो वामनाडीप्रवाहकः ।
दक्षनाडीप्रवाहेतु शिवरूपी दिवाकरः ॥ १० ॥
हकारो निर्गमे प्रोक्तः सकारोन्तःप्रवेशने ।
हकारः शम्भुरूपस्थः सकारः शक्तिरुच्यते ॥ ११ ॥

इडा पिङ्गला इति। स्पष्टम्। नाडीना नामानि। प्राणोऽपान इति। दशविधवायुनामानि स्पष्टम्। प्रकट इति। देहमध्यत शरीरमध्ये प्रकट व्यक्त वायुमञ्चार इडापिङ्गलासुषुम्नाभि तिसृभि नाडीभि बुधे लक्ष्यते ज्ञायते। इडा नाडीति। वामनासापुटस्था इडा नाडी तत्र य वायु सञ्चरति सा चन्द्रवाहिनीति। तत्र चन्द्र वर्तते। एव दक्षिणनासापुटस्था पिङ्गला नाडी तत्र य सञ्चरति सा सूर्यवाहिनी। तत्र सूर्य वर्तते। या सुषुम्ना नाडी सा देहमध्यस्था ब्रह्मरन्ध्रगामिनी शम्भुस्वरूपिणीति। हंसस्वरूपक शम्भु इति। शक्तिरूप इति। श्लोकद्वयम् सुगमम्॥ ६–११॥

इडा, पिङ्गला, सुषुम्ना, गान्धारी, हस्तजिह्विका, पूषा, यशा, अलम्बुषा, कुहू, शङ्खिनिका, ये दश नाड़ियों के नाम हैं। प्राण, अपान, समान उदान, व्यान, नाग, कूर्म, कृकल, देवदत्त, धनञ्जय ये दश वायु के नाम हैं। इडा, पिङ्गला, सुषुम्ना, देहस्थित उक्त तीन नाड़ियों द्वारा पण्डितजन शरीरस्थ वायु का ज्ञान करते हैं। यहाँ किसी का मत है कि इडा नाड़ी हृदय से दक्षिण नासापुट के तरफ जाती है और उसमें प्राणवायु का सञ्चार होता है। पिङ्गला हृदय से बायें नासापुट को जाती है और उसमे अपानवायु का सञ्चार होता है, जिह्विका नाड़ी नाभिप्रदेश में है और उसमें समानवायु का सञ्चार होता है, सुषुम्ना नाड़ी में व्यान नामक वायु का सञ्चार होता है, इसी प्रकार पूषादि पाँच नाड़ियों में नागादि पाँच वायुओं का सञ्चार होता है। और किसी का मत है कि नाक, आँख, कान के दोनों छिद्र मुख, नाभि, गुदा और ब्रह्मरन्ध्र द्वारा दश वायुओं का सञ्चार होता है। किन्तु अधिकतर द्वितीय मत ही युक्तियुक्त मालूम होता है। इसमें योगिजन ही प्रमाण हैं। नाक के बायें छिद्र से बहनेवाली नाड़ी को इडा कहते हैं और वह चन्द्र के वायु को वहन करती है अतः चन्द्रवाहिनी कहते हैं। और दाहिने नाक के छिद्र में पिंगला नाड़ी है जोकि सूर्य के वायु को वहन करती है अतः उसे सूर्यवाहिनी कहते हैं। सुषुम्ना ब्रह्मरन्ध्रस्थित

नाड़ी को कहते हैं वह शम्भु के वायु को वहन करती है अत उसे शम्भुवाहिनी कहते हैं। यह शम्भु हसस्वरूप हैं। वामनाड़ी के चलानेवाले चन्द्र शक्तिस्वरूप हैं और दाहिने नाड़ी के चलानेवाले सूर्य शिवस्वरूप हैं और शम्भु हसस्वरूप हैं। वायु के निकलने में हकार और सकार अन्त प्रवेश के समय रहते हैं अत हकार शम्भु स्वरूप और सकार शक्तिस्वरूप है ॥ ६–११ ॥

एकैकघटिकाः पञ्च क्रमेणनोदयन्ति ताः।
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥ १२ ॥
मध्ये पृथ्वी अधश्चाप ऊर्द्ध्वं वहति चानलः।
तिर्यग्वायुप्रवाहश्च नभो वहति संक्रमे ॥ १३ ॥
धराद्येकैकतत्त्वस्य एकैकघटिकोदयः।
अहोरात्रस्य मध्ये स्युस्तेन द्वादश संक्रमाः ॥ १४ ॥
आदौ चन्द्रः सिते पक्षे भास्करस्तु सितेतरे।
प्रतिपदादितो ह्यानि त्रीणि त्रीणि क्रमोदयः ॥ १५ ॥

एकेक इति। एकैकस्य पचघटिका दण्डा क्रमेण उदयन्ति ता पचघटिका पच पृथ्वी-अप-तेजो-वायु आकाश तत्त्वात्मिका। मध्ये इति। वामे वा दक्षिणे नासापुटे पूर्णे वायौ वहति पृथ्वीतत्त्वम्। अधश्चाप। नासापुटादध स्थ ओष्ठ स्पृशन् यो वायुर्वहति स वायुर्जलसज्ञ। ऊर्ध्वं वहति चानल। ऊर्ध्वं नासापुटस्योर्ध्वभाग स्पृशन् यो वायुर्वहति सोऽनल। तिर्यग् दक्षिणस्वरो वामो वा द्वयोर्मध्ये यो वायुर्वहति तस्य वायो वायुतत्त्वमिति नाम। नभो वहति सक्रमे। दक्षिणो वा वामो वहन् द्वितीयपुटादपि वायु निस्सरति स सक्रम काल तस्मिन् काले यो वायु वहति स आकाशतत्त्व वहति। अत्र[1] मतान्तरेण वामस्वरे वहति यावत् पृथ्वीतत्त्वम् तावद् बुधग्रहस्योदय। जलतत्त्वे वहति चन्द्रस्योदय। तेजसि वहति शुक्रस्योदय। वायुतत्त्व वहति गुरोरुदय। एव दक्षिणवायौ वहति रविभौमशनिराहव पृथिव्याद्युदयक्रमेण उदयन्ति। यद्यन्ये प्रश्ने ग्रहफलमादिशेत्। यथा लग्नपत्तिनि बुधे फल तथा तदुदयेऽपि। एव सर्वग्रहेषु शुभाशुभफल ज्ञातव्यम्। धराद्येकैक इति। पृथिव्याद्येकैकतत्त्वस्य। एकैकदण्डोदय अहोरात्रस्य षष्टिघटिकात्मकस्य मध्ये पञ्चदण्डक्रमेण द्वादशसक्रमा भवन्ति। आदाविति। चन्द्रो नाम वामनासापुटस्थवायु प्रतिपदादीनि त्रीणि दिनानि त्रीणि दिनानि कृत्वा आदौ

1. बुधचन्द्रशुक्रगुरवो वामनाड्यां धरादिन।
रविर्भौमो यम सूय वयिता सूर्यनाडिगा ॥

वहति ततो दिनत्रये सूर्य ततो दिनत्रये चन्द्र । सिते शुक्लपक्षे पुनर्भास्कर, सितेतरे कृष्णपक्षे प्रतिपदादितिथिषु आदौ सूर्य ततो दिनत्रये चन्द्र एव सर्वत्र कृष्णपक्षे वहतीति ॥ १२–१५ ॥

तीनों नाडियों में क्रम से पृथ्वी, जल, तेज, वायु, आकाश ये पाँच तत्त्व उदय होते हैं और इनमें एक एक का भोग पाँच घटी होता है। बायें या दाहिने नाक के छिद्र से यदि ठीक-ठीक मध्यभाग से वायु निकल रही हो तो उस समय पृथ्वी तत्त्व बह रहा है अर्थात् पृथ्वी तत्त्व का उदय है ऐसा समझना चाहिये। नाक के छिद्र से ओष्ठ का स्पर्श करती हुई वायु चलती हो तो जल तत्त्व का उदय है। यदि नाक के ऊपर के भाग को स्पर्श करती हुई वायु चलती हो तो अनल तत्त्व को समझना चाहिये। बायें वा दायें दोनों स्वरों को चलते हुये यदि तिर्यग् वायु चले तो वायुतत्त्व और दोनों स्वरों में से एक चलता हो तथा कुछ काल के बाद दूसरा भी चलने लगे इस समय को संक्रमकाल कहते हैं इसमें चलने वाली वायु को आकाश तत्त्व समझना चाहिये। जब तक पृथ्वीतत्त्व चलता है तब तक बुध ग्रह का उदय रहता है जलतत्त्व के समय चन्द्रमा का, तेज तत्त्व के समय शुक्र का, वायु तत्त्व के समय गुरु का उदय रहता है। दाहिने स्वर के उदय में भी पृथ्वी तत्त्व आदि के अनुसार सूर्य, भौम, शनि और राहु का उदय समझना चाहिये। जिस ग्रह के उदय काल में प्रश्न हो उसके अनुसार फल कहना चाहिये। जैसे बुध ग्रह के उदय में प्रश्न हो तो बुध को लग्न में रहने से जो फल होता है वही उसके उदय में फल होता है इसी प्रकार सभी ग्रहों के उदय से शुभ अशुभ फल समझना चाहिये। पृथ्वी आदि एक तत्त्व का एक एक घटी उदय मान होता है इस प्रकार अहोरात्र अर्थात् ६० घटी में १२ संक्रम काल होता है। शुक्लपक्ष में प्रतिपदा से तीन तिथियों में पहले चन्द्र स्वर अर्थात् वामस्वर इसके बाद की तीन तिथियों में पहले सूर्यस्वर अर्थात् दक्षिण स्वर का उदय होता है फिर तीन तिथियों में पहले चन्द्रस्वर इसके बाद सूर्यस्वर एवं १५ तिथियों में पहले वामस्वर का ३ बार उदय और दक्षिण का २ बार उदय होता है। एवं कृष्णपक्ष में इसके विपरीत उदय होता है ॥ १२–१५ ॥

चन्द्रोदये यदा सूर्यश्चन्द्रः सूर्योदये यदा।
अशुभं हानिरुद्वेगस्तद्दिने जायते ध्रुवम् ॥ १६ ॥
शशाङ्कं चारयेद्रात्रौ दिवा चार्यो दिवाकरः।
इत्यभ्यासरतो नित्यं स योगी नात्र संशयः ॥ १७ ॥
यात्राकाले विवाहे च वस्त्रालङ्कारभूषणे।
शुभकर्मणि सन्धौ च प्रवेशे च शशी शुभः ॥ १८ ॥

विग्रहे द्यूतयुद्धेषु स्नानभोजनमैथुने ।
व्यवहारे भये भङ्गे भानुनाडी प्रशस्यते ॥ १९ ॥

होमश्च शान्तिकं चैव दिव्यौषधिरसायनम् ।
विद्यारम्भं स्थिरं कार्यं कर्तव्यं च निशाकरे ॥ २० ॥

चन्द्रोदये इति । यस्य नरस्य चन्द्रोदये वामवायूदयसमये यदा सूर्यः दक्षिणनासापुटस्थवायुर्वहति । एवं यदा सूर्योदये दक्षिणवायूदयसमये चन्द्रो वामनासापुटस्थवायुर्वहति तदा तद्दिने तस्य पुरुषस्य शुभं अकल्याणं हानिः उद्वेगः उपलापो भवति । निजनिजोदयसमये चन्द्रः सूर्यो वा वहति तदा शुभम् । शशाङ्कमिति । स्वराभ्यासियोगिभ्यः उपदेशमादाय एवमभ्यासं कुर्वन् रात्रौ शशाङ्कं वामस्वरं धारयेत् चालयेत् । दिवाकरो दक्षिणस्वरः दिवा दिवसे च धार्यः सचारणीयः नित्यम् । इत्येवं अभ्यासरतः श्वासरतः यः कश्चित् स योगी । अत्र संशयो न कर्तव्यः । अन्यत् स्पष्टम् ॥ १६–२० ॥

जिस पुरुष का जिस दिन वामस्वर के चलने के समय दाहिनास्वर और दाहिने-स्वर के चलने के समय वायांस्वर चले तो उस दिन उस पुरुष का अशुभ, हानि और उद्वेग ये अशुभ फल होते हैं। किसी स्वर के अभ्यास करने वाले योगी के बताए हुए मार्ग के अनुसार रात्रि में वामस्वर को चलावे और दिन में दक्षिणस्वर को चलाए इस प्रकार नित्य स्वर के चलाने में अभ्यासरत पुरुष को योगी कहते हैं इसमें तनिक भी संशय नहीं करना चाहिये। यात्रा, दान, विवाह, वस्त्र, आभूषण, शुभकार्य और संधि ( सुलह ) में वामस्वर शुभद होता है। विग्रह, द्यूत ( जुआ ), युद्ध, स्नान, भोजन, मथुन, व्यवहार, भय, भङ्ग में दक्षिणस्वर शुभ होता है। शान्ति के लिए हवन में, दिव्य औषधि और रसायन, विद्यारंभ और स्थिर कार्य को वामस्वर में करना चाहिए ॥ १९–२० ॥

दूरयुद्धे जयी चन्द्रः समासन्ने दिवाकरः ।
वहन्नाडीपदेऽग्रे च कृते यात्रातिसिद्धिदा ॥ २१ ॥

सूर्ये वहति चन्द्रे वा पूर्णपादं प्रचालयेत् ।
चन्द्रे समपदैर्यात्रा सूर्येऽसमपदैः क्रमात् ॥ २२ ॥

पृथ्वीजले शुभे तत्त्वे तेजोमिश्रफलोदयम् ।
हानिमृत्युकरौ पुंसामुभौ हि व्योममारुतौ ॥ २३ ॥

आपः श्वेताः क्षितिः पीता रक्तवर्णो हुताशनः।
मारुतो नीलवर्णः स्यादाकाशो धूम्र एव च ॥ २४ ॥
योधद्वयकृते प्रश्ने पूर्णे च प्रथमो जयी।
रिक्तसंस्थे द्वितीयस्तु जयी भवति नान्यथा ॥ २५॥

दूरयुद्धे इति। दूरात् प्रदेशाद्युद्धे बाणादिविनिर्गतो प्रदेशाद्युद्धे सति चन्द्रो वामस्वर। अत्र केचित् दूरयुद्धे बहुकालव्याप्ययुद्धे चन्द्रस्वर। समासन्ने खड्गादिसाध्ये युद्धे दिवाकरो दक्षिणस्वर प्रशस्त। केचित् समासन्ने स्वरप-समयसाध्ये युद्धे सूर्यस्वर प्रशस्त इति व्याकुर्वन्तीति। यात्रा च वहन्नाडीपदे कार्या अर्थात् य एव स्वरो वहति वामो दक्षो वा वामे वहति आदौ वामपाद चालयेत्, दक्षे वहति आदौ दक्षपाद चालयेत्। एव पदे दीयमाने यात्रा सिद्धिदा भवति। सूर्ये वहति इति सुगमम्। पृथ्वीजले इति। पृथ्वीजले तत्त्वे पृथिव्या जले च तत्त्वे पचमदण्डात्मके वहत प्रष्टु शुभ शुभफल वदेत्। तेजसि तत्त्वे मिश्र फलम्। व्योममारुतयो पुसा हानिमृत्युकरौ। व्योम्नि-हानि कार्यहानि, वायो मृत्यु कष्ट वान्यम। आप इति। प्रष्टु वस्तुनि पृथिव्यादिवर्ण ब्रूयात। योधद्वय इति। द्वयोर्योधयोर्मध्ये को जेता भविष्यतीति प्रश्ने पूर्णनाडीगते प्रश्ने प्रथमो जयी यस्य प्रथम नामोच्चारण कृत स जयी वाच्य। अथ रिक्तसस्थे शून्यनाडीस्वरे प्रश्ने योधयोर्मध्ये यस्य पश्चान्नामोच्चा-रण कृत स जयी वाच्य इत्यर्थ। नान्यथा ज्ञातव्य ॥ २१-२५ ॥

दूर से अर्थात् धनुषबाण द्वारा किये जाने वाले युद्ध में चन्द्रस्वर श्रेष्ठ और तलवार आदि शस्त्रों से किये जाने वाले युद्ध मे सूर्यस्वर श्रेष्ठ होता है। जो स्वर चलता हो उसी पैर को पहले चलाने से यात्रा शुभद होती है। सूर्य या चन्द्र नाडी के चलने के समय उन नाडियों के पैर को पूरा पूरा चलाना चाहिये, चन्द्रस्वर के समय समसंख्यक और सूर्यस्वर के समय विषम पद चलाना चाहिये। पृथ्वी और जलतत्त्व शुभद, तेजतत्त्व मिश्रित और आकाश और वायुतत्त्व अशुभफल देने वाले होते हैं। प्रश्नकर्ता के पूछे हुये वस्तु को बताने के लिये तत्त्वों के वर्ण क्रम से जलतत्त्व का श्वेतवर्ण, भूतत्त्व का पीतवर्ण, अग्नितत्त्व का रक्तवर्ण, वायुतत्त्व का नीलवर्ण और आकाशतत्त्व का धूम्रवर्ण होता है। दोनों योधाओं मे कौन विजयी होगा ऐसे प्रश्न मे प्रश्न समय यदि पूर्णस्वर चलता हो तो योधाओं मे जिनका नाम पहले लिया है उसी की विजय होगी। यदि शून्यस्वर के समय प्रश्न किया हो तो जिसका नाम पीछे से उच्चारण किया है उसकी विजय रहती। इसमे अन्यथा नहीं होता है ॥

युद्धकाले यदा चन्द्रः स्थायी जयति निश्चितम्।
यदा सूर्यप्रवाहश्च यायी च विजयी तथा ॥ २६ ॥

पार्थिवे सक्षतं युद्धं सन्धिर्भवति वारुणे।
विजयो वह्नितत्त्वेन वायौ भङ्गो मृतिस्तु खे ॥ २७ ॥
पूर्णनाडीगतं पृष्ठे शून्यमङ्गं तदग्रतः।
शून्यस्थाने कृतः शत्रुर्म्रियते नात्र संशयः ॥ २८ ॥
पूर्वोत्तरदिशोश्चन्द्रे भानौ पश्चिमयाम्ययोः।
स्थितस्तत्र जयी युद्धे स्थायी योधः क्रमेण च ॥ २९ ॥
वामनाड्युदये चन्द्रः कर्तव्यो वामसम्मुखः।
सूर्यवाहे तथा सूर्यः पृष्ठदक्षिणगो जयी ॥ ३० ॥

युद्धकाले इति। यदा युद्धकाले स्थायिनः चन्द्रो वहति तदा स्थायी निश्चितम् जयी भवति, यायिनः सूर्यप्रवाहे जयो भवति। अर्थात् स्थायिना वामवायुप्रवाहे यायिना दक्षवायुप्रवाहे युद्धं कर्त्तव्यमिति। पार्थिवे इति। सुगमम्। पूर्णनाडीगतमिति। पूर्णनाडीगतमङ्गं शरीरं पृष्ठतः तदग्रतः शून्यमङ्गं कर्त्तव्यम्। शून्यस्थाने कृतः शत्रुः म्रियते। अत्र संशयो न। अयमर्थः। यस्मिन् समये शत्रौ प्रहारः क्रियते तस्मिन् समये यः स्वरो न वहति तद्दिग्‌वस्थितं तं कृत्वा हन्यात्। एवं शत्रुकृतप्रहारसमये च यः स्वरो न वहति तद्दिगवस्थितं शरीरं प्रहर्त्तोभिमुखं कुर्यात्तदा प्रहारो न लगतीति। पूर्वोत्तरदिशोरिति। चन्द्रे वामवायौ वहति स्थायी योधः पूर्वदिशि वा उत्तरदिशि स्थितो जयी भवति। एवं भानौ दक्षिणस्वरे वहति यायी योधः पश्चिमदिशि वा दक्षिणदिशि स्थितो जयी भवति। वामनाड्युदये इति। युद्धकाले यदा वामस्वरो वहति तदा चन्द्रो वामसम्मुखः कार्यः। दक्षिणस्वरे वहति सङ्ग्रामकाले सूर्यं पृष्ठदक्षिणस्थं कुर्यात्। अत्र वामसम्मुखदक्षिणत्वं राश्यनुसारतः (मेषे च सिंहे धनपूर्वभागे) इत्यग्निना वा जन्मादिद्वादशभावक्रमेण पूर्वादिदिक्कल्पनया ज्ञेयमिति ॥ २६–३० ॥

युद्ध के समय स्थायी योधा वामस्वर के चलने के समय और यायी योधा दक्षिणस्वर के चलने के समय युद्ध का आरम्भ करें तो दोनों विजयी होते हैं। जलतत्त्व के उदय के समय युद्ध आरम्भ करने से [illegible] हो जाता है और दोनों में सन्धि होती है। अग्नितत्त्व के उदय में विजय, वायुतत्त्व के उदय में भङ्ग और आकाशतत्त्व के समय में मृत्यु होती है। जिस समय शत्रु के ऊपर प्रहार करता हो उस समय जो स्वर चलता हो उस स्वर के अंग को शत्रु में पीछे करके जो स्वर नहीं चलता हो उसके अंग को शत्रु के आगे करके प्रहार करने से उसका प्रहार नहीं लगता है। वामस्वर चलता हो स्थायी योधा पूर्व या उत्तर दिशा में स्थित

होकर युद्ध करे तो विजयी होता है। एव दक्षिणस्वर के चलने के समय स्थायी योधा पश्चिम या दक्षिण दिशा में स्थित होकर युद्ध करे तो विजयी होता है। युद्ध के समय यदि वामस्वर का उदय हो तो चन्द्रमा को बायें या सामने करके युद्ध का आरम्भ करे। एव दक्षिण स्वर चलता हो तो सूर्य को पीछे या दाहिने करके युद्ध का आरम्भ करे तो विजय होती है। यहाँ दिशा का ज्ञान उस समय के चन्द्र, सूर्य के राशि से समझना चाहिये। जैसे मेष, सिंह, धन इनको पूर्व में, वृष, कन्या, मकर इनको दक्षिण में, मिथुन, तुला, कुम्भ इनको पश्चिम में और शेष कर्क, वृश्चिक, मीन को उत्तर में समझना चाहिये ॥ २६-३० ॥

शयने वा प्रसङ्गे वा युवत्यालिङ्गनेपि वा ।
यः सूर्येण पिबेच्चन्द्रं स भवेन्मकरध्वजः ॥ ३१ ॥
जीवेन गृह्यते जीवो जीवो जीवस्य दीयते ।
जीवस्थानगतो जीवो बालाजीवांतकारकः ॥ ३२ ॥
रात्र्यन्तयामवेलायां प्रसुप्ते कामिनीजने ।
ब्रह्मजीवं पिबेद्यस्तु बालाप्राणहरो नरः ॥ ३३ ॥
अर्केन्दुयोगे पुन्नार्यांस्तस्मिन्काले रते सति ।
तत्क्षणे दीयते चन्द्रो मोहमायाति कामिनी ॥ ३४ ॥
चन्द्रचारे विषं हन्ति सूर्ये बाला वशं नयेत् ।
सुषुम्नायां भवेन्मोक्ष एको देवस्त्रिधा स्थितः ॥ ३५ ॥

शयने इति। शयने या प्रसङ्गे वा युवत्यालिङ्गिते अर्थात् शयनप्रसङ्गे यदा युवती आलिङ्गति तदा चन्द्र वामस्वर युवत्या सूर्येण दक्षिणेन स्वरेण पुरुष पिबेत्तदा मकरध्वज कामदेव इव सुन्दरो भवेत्। स च पुरुषस्य वामपार्श्वशयनेनैव भवतीति वायुनियम। जीवेन इति। जीवेन प्राणेन जीव प्राणो गृह्यते। कोऽर्थ। दक्षिणस्वरे वहति यदि वामे भवितुमुक्तो भवति तदा दक्षिणेनैव वाम पिबेत्। वामस्वरोदये दक्षिणमेव स्थिरत कुर्यात्। एव वामेन दक्षिण पिबेत्। एव क्रमो जीवेन गृह्यते जीवेति व्याख्यातम्। एव वामस्वरस्थानगतो दक्षिण दक्षिणस्वरस्थानगतो वाम। तत्क्रमे बालाजीवान्तकारक। कोऽर्थ बालासुख मृत्यु तस्यान्तकारक अर्थात् मृत्युनयतीर्थे वायुर्हरतीति। रात्र्यन्तयाम इति। रात्र्यन्ते रात्रेरवसानभागे वेलाया समये कामिनीजने प्रसुप्ते सति यो नर युवत्या ब्रह्मजीव ब्रह्मनिर्गतवायु पिबेत् स नरो बालाप्राणहरोऽत्यन्ताभिभावको भवेत्। अर्केन्दुयोगे इति। स्पष्टम्। चन्द्रचारी इति। चन्द्रचारी वामवायुसञ्चरणशीलो विष हन्ति तथा सर्पादि-

दक्षे सति यथा वामवायुर्वहति तथा विधेयम् । सूर्ये स्वरे वहति बाला वशं नयेत् । सुषुम्नाया ब्रह्मगतनाड्या वायुसञ्चारान्मोक्षो भवति । एक एव देवो वायुस्त्रिधा प्रकारत्रयेण स्थित । यदा यत्र वहति तत्र तत्कर्म कर्त्तव्य मिति ॥ ३१–३५ ॥

शयन के समय स्त्री के आलिङ्गन में पुरुष बायें करवट से सोवें और स्त्री दायें करवट से तो क्रम से दोनों के दक्षिण और वामस्वर चलेंगे ऐसी स्थिति में पुरुष अपने दक्षिणस्वर से स्त्री के वामस्वर को पीवे तो कामदेव के समान हो जाता है। दक्षिण स्वर चलते रहने पर यदि वामस्वर चलने की सम्भावना हो तो दक्षिणस्वर से ही वामस्वर को पीवे । एवं वामस्वर के उदयकाल में यदि दक्षिणस्वर की सम्भावना हो तो वाम से दक्षिण को पावे । अतः जीव ( प्राण ) से जीव ( प्राण ) को पीना कहा है ऐसा करने से स्त्री सुखी होती है । रात्रि के अन्त समय में अर्थात् ब्राह्ममुहूर्त्त में स्त्रियों को सोते रहते ब्रह्म का जय करे अर्थात् युवती के ब्रह्मस्थान से निकलती हुई वायु को पीता है वह पुरुष स्त्री को अत्यन्त सुखकारक होता है। पुरुष और स्त्री के दक्षिण और वामस्वर के समय रति करते समय वामस्वर को देने से स्त्री अत्यन्त प्रसन्न हो जाती है। वामस्वर के समय विष का असर शरीर में नहीं होता है। सूर्यस्वर के समय स्त्रीवशीकरण होता है। सुषुम्ना के उदय समय में मोक्ष की प्राप्ति होती है । एक ही ब्रह्म तीन प्रकार से उदय होता है जिस समय जो स्वर चले उसके कार्यों को उसके उदय में करना चाहिये ॥ ३१–३५ ॥

भुक्तमात्रे च मन्दाग्नौ स्त्रीणां वश्यार्थकर्मणि ।
शयनं सूर्यवाहेन कर्तव्यं सर्वदा बुधैः ॥ ३६ ॥
श्रान्ते शोके विषार्ते च ज्वरिते मूर्च्छितेपि वा ।
सज्जनस्यापि बोधार्थं चन्द्रचारं प्रवाहयेत् ॥ ३७ ॥
ऊर्ध्वं वामाग्रतो दूतो ज्ञेयो वामपथे स्थितः ।
पृष्ठे दक्षे तथाधस्तात्सूर्यवाहगतो मतः ॥ ३८ ॥
पूर्णनाडीस्थितो दूतो यत्पृच्छति शुभाशुभम् ।
तत्सर्वं सिद्धिमायाति शून्ये शून्यं न संशयः ॥ ३९ ॥

भुक्तमात्रे इति । सुगमम् । श्रान्ते इति । स्पष्टार्थं । ऊर्ध्वमिति । देवज्ञ-सकाशात् उच्चपीठादिस्थो दूतो वामगत, वामस्थितोऽपि वामगत एव । अग्रगतश्चेत् प्रश्नं करोति तदापि वामगत एव बोद्धव्य । तथा तेनैव प्रकारेण पृष्ठे पश्चात् स्थित दक्षे दक्षिणे च स्थित आत्मनः सकाशात् नीचस्थ -एव पृष्ठदक्षिणस्थ दूत दक्षिणगत बोध्यम् । पूर्णनाडी इति । स्पष्टार्थं ॥

जिस समय दक्षिणस्वर चलता हो उस समय भोजन, मन्दाग्नि तथा स्त्री के वशीकरण आदि प्रयोग शयन इन कार्यों को करना चाहिये। थकावट, शोक, विषार्त, ज्वर, मूर्च्छा, सज्जन के बोधार्थ कोई कार्य वामस्वर में करे। यदि दूत या प्रश्नकर्त्ता ज्योतिषी से ऊँचे स्थान में स्थित होकर या सामने अथवा बायें भाग में स्थित होकर प्रश्न करे तो उसे वामभागगत समझना चाहिये। यदि पीछे, दाहिने अथवा नीचे होकर प्रश्न करे तो उसे दक्षिण समझना चाहिये। पूर्णस्वर के उदयकाल में दूत जो कुछ शुभ या अशुभ प्रश्न करे वह सभी सिद्ध होते हैं। शून्यस्वर में जो प्रश्न किया जाता है वह सभी शून्य फल देने वाले होते हैं ॥ ३६–३९ ॥

पृथिव्यादित्रितत्त्वेन दिनमासाब्दकैः फलम् ।
शोभनं च तथा दुष्टं व्योममारुतवह्निभिः ॥ ४० ॥
श्वासप्रवेशकाले तु दूतो जल्पति वाञ्छितम् ।
तत्सर्वं सिद्धिमायाति निर्गमे नास्ति सुन्दरम् ॥ ४१ ॥
व्यवहारी खलो वादी द्विपदायादवञ्चकाः ।
कुपितः स्वामिचौराद्याः पूर्णस्थाः स्युर्भयङ्कराः ॥ ४२ ॥
सूर्ये चेद्विषमान्वर्णान् समवर्णान्निशाकरे ।
वाहस्थो भाषते दूतस्तदा लाभोऽन्यथा नहि ॥ ४३ ॥
आदौ शून्यगतः पृच्छेत्पश्चात्पूर्णे विशेद्यदि ।
तदा सर्वार्थसिद्धिः स्यादिति जानीहि निश्चितम् ॥ ४४ ॥

पृथिव्यादि इति । पृथिव्यादित्रितत्त्वेन पृथिव्यप्तेजोभिर्वहद्भिः दिनमासाब्देन शोभनं फलम् वक्तव्यम् । प्रश्नकाले पृथ्वीतत्त्वे वहति दिवसेन । अप्तत्त्वे वहति मासेन । तेजसि तत्त्वे वहति अब्देन शोभनं फलं भवतीत्यर्थः । एवं व्योममारुतवह्निभिर्वहद्भिर्दुष्टं फलं क्रमेण दिनमासाब्दके भवति । श्वासप्रवेशकाले इति । यदि दूतः श्वासप्रवेशकाले वामदक्षिणस्वरप्रवेशकाले जल्पितुम् प्रश्नं वाञ्छति तदा तत्सकलं वाञ्छितम् अवश्यं सिद्धिमायाति भविष्यतीत्यर्थः । चेन्निर्गमे वायौ निस्सरति जल्पितं वाञ्छति तदा शोभनं फलं न भविष्यतीत्यर्थः । व्यवहारी इति । स्पष्टम् । सूर्ये चेदिति । सुगमम् । आदौ शून्यगते इति । आदौ शून्यगतः शून्यस्थानगतः पृच्छेत् पश्चात् पूर्णे पूर्णस्वरस्थाने यदि विशेत् उपविशति तदा सर्वार्थसिद्धिः स्यात् । इति निश्चितं जानीहि ॥ ४०–४४ ॥

जिस समय प्रश्नकर्त्ता प्रश्न कर रहा हो यदि उस समय पृथ्वी, जल और तेजस् तत्त्व का उदय हो तो क्रम से प्रश्नोक्त शुभ फल दिन मास तथा वर्ष में होगा।

अर्थात् पृथ्वी तत्त्व हो तो एक दिन में, जलतत्त्व हो तो एक मास में यदि तेजस् तत्त्व का उदय हो तो एक वर्ष में शुभफल होगा। इसी प्रकार यदि आकाश, वायु और अग्नि तत्त्व का उदय हो तो पूर्वोक्त दिनादि क्रम से अशुभ फल होंगे। यदि प्रश्नकर्ता श्वास प्रवेश समय में प्रश्न करता हो तो उसका सम्पूर्ण अभीष्ट कार्य निःसंशय सिद्ध होता है। यदि श्वास के निर्गम समय में प्रश्न करता हो तो उसके अभीष्ट सिद्ध नहीं होते हैं। पूर्णस्वर के समय व्यवहार करने वाला सदा भागी होता है, शत्रुओं का घातक शत्रु होता है, और कुपित हुये स्वामी चौर आदि भयकर हो जाते हैं पर दक्षिण स्वर चलता हो और विषम वर्णों का और वामस्वर चलता हो उस समय यदि समवर्णों का उच्चारण दूत करे तो उसे लाभ होता है इससे भिन्न होने से लाभ नहीं होता है। पहले शून्यस्वर के स्थान में स्थित होकर प्रश्न करे इसके बाद पूर्णस्वर के स्थान में बैठे तो सभी कार्यों की सिद्धि होती है यह निश्चित है। अथवा पहले प्रश्नकर्ता पूर्णस्वर के दिशा में स्थित होकर प्रश्न करे बाद में शून्यस्वर के दिशा में बैठे तो वाम समझना चाहिये ॥ ४०–४४ ॥

गर्भप्रश्ने यदा दूतः पूर्णे पुत्रः प्रजायते ॥
शून्ये कन्या युगे युग्मं गर्भपातश्च संक्रमे ॥ ४५ ॥
आयाति वारुणे पांथस्तत्रैवास्ते सुखं क्षितौ।
प्रयाति पवनेऽन्यत्र मृत उत्यनले वदेत् ॥ ४६ ॥
उदयश्चन्द्रमार्गेण सूर्येणास्तमनं यदि।
तदाऽतिगुणसङ्घान्त विपरीते च विघ्नता ॥ ४७ ॥

गर्भेति। गर्भप्रश्ने पूर्णे वहति वामे वा दक्षिणे स्वरे पूर्णे वहति यदि कश्चिद्दूतः पृच्छति। अस्मिन् गर्भे पुत्रो वा पुत्री भविष्यतीति। तदा अस्मिन् गर्भे पुत्रो भविष्यतीति वदेत्। शून्ये शून्यगतश्चेत्पृच्छति तदा गर्भे कन्यका वाच्या। युगे युग्ममिति। आदौ पूर्णे प्रश्नः पश्चात् शून्यगतश्चेत्तदा युग्मम् अर्थात् प्राक् पुत्रः पश्चात्कन्या इति वदेत्। अथवा आदौ शून्ये पश्चात्पूर्णगत तत्रापि युग्मं वदेत्। इत्येव स्वराभ्यामिति एव वस्तु सामर्थ्यम्। ननु पठन-मात्रेण। गर्भपातश्च संक्रमे। आदौ पूर्णो वहन पश्चादन्यपुटान्निष्क्रामति तदा संक्रमकाल। अत्र प्रश्ने गर्भपातं वदेत्। आयातीति। दूरगतस्यागमनप्रश्ने चेत्प्रश्नकाले वारुणे तत्त्वे वहति तदा पान्थ आयाति स्थिरो पृथ्वीतत्त्वे वहति सति प्रश्ने तत्रैव सुखमास्ते इति वदेत्। पवने वायुतत्त्वस्योदये प्रश्ने सति तस्मा-त्स्थानादन्यत्रगत इति वदेत्। अनले अग्नितत्त्वे वहति सति पान्थो मृत इति वदेत्। उदय इति। चन्द्रमार्गेण वामस्वरे वहति यदि सूर्यस्य उदयः। सूर्येण

दक्षस्वरे वहति अस्तमन चेद्भवति तदा गुणाना सघातो भवति । विपरीते सति बहुविघ्नता बहूनि विघ्नानि भवति ॥ ४५–४७ ॥

यदि कोई पूर्णस्वर के उदय म प्रश्न करता हो कि इस गर्भ से पुत्र वा कन्या क्या होगा तो पुत्र होगा ऐसा कहना चाहिये । शून्य स्वरोदय के समय कन्या । पहले शून्य और फिर पूर्ण स्वरोदय हो तो दोनों अर्थात् पुत्र और कन्या होगें । सक्रम काल मे प्रश्न हो तो गर्भपात होगा । परदेशी के आने के सबन्ध में यदि जलतत्त्व के उदय में प्रश्न हो तो शीघ्र ही आवेगा, पृथ्वी तत्त्व के उदय म प्रश्न हो तो जहाँ है वहाँ सुख से है । वायुतत्त्व के उदय में उस स्थान से अन्यत्र गया है और अग्नितत्त्व के उदय में परदेशी मर गया है ऐसा कहे । यदि वामस्वर के चलते हुये सूर्य का उदय हो और दाहिने स्वर के चलते हुये सूर्यास्त हो तो गुणों का सघात होता है और इससे विपरीत हो तो अनेक विघ्न होते हैं ॥ ४५–४७ ॥

पक्षतोतिक्रमाद्व्याधिर्द्विपक्षादिष्टनाशनम् ।
पक्षत्रयमतिक्रम्य जायते मरणं ध्रुवम् ॥ ४८ ॥
वामे वा दक्षिणे वापि धराष्टाङ्गुलदीर्घिका ।
षोडशाङ्गुलमापः स्युस्तेजश्च चतुरङ्गुलम् ।
द्वादशाङ्गुलदीर्घः स्याद्वायुर्व्योमाङ्गुलेन हि ॥ ४९ ॥
पृथ्वी पीता सितं वारि रक्तवर्णो धनञ्जयः ।
मारुतो नीलजीमूत आकाशो वर्णपञ्चकः ॥ ५० ॥

पक्षेति । चन्द्रसूर्यस्वरवशात् उक्तशुभपक्षतो यच्छुभपक्षता भवति । उदयश्चन्द्रमार्गेणेत्यादि शुभपक्षमतिक्रम्य चेदुदयास्तमयौ तदा पक्षातिक्रमणम् एव चेद्भवति तदा व्याधिः स्यात् । पक्षद्वयमतिक्रम्य चेद्भवति तदेष्टनाशनम् । पक्षत्रयमतिक्रमणे मरणम् । वामेति । वामे वा दक्षिणे स्वरे धरातत्त्वम् अष्टाङ्गुलदीर्घं वहति । आपः जलतत्त्व षोडशाङ्गुल वहति, तेजस्तत्त्व चतुरङ्गुल वहति । वायुतत्त्व द्वादशाङ्गुलदीर्घं, व्योम अङ्गुलमात्र दीर्घं वहति । अत्र स्वरधेय स्वराभ्यासी अङ्गुलाङ्कितमेक षोडशाङ्गुलपरिमित यष्टिमादाय नासापुटस्थ कृत्वा किं तत्त्व वहतीति परीक्षेत । तत्र चेदष्टाङ्गुलसीमात वायुर्वहति तदा पृथ्वी तत्त्व वहति । एवमन्येषा विचार कर्त्तव्य । पृथ्वीति । सुगमम् ॥ ४८–५० ॥

यदि पूर्व कहे हुये ४७ श्लोक के अनुसार उदय स्वर न हो तो पक्ष का अतिक्रमण होता है यदि ऐसा होता हो तो व्याधिभय यदि दोनों पक्षों का अतिक्रम हो तो इष्ट का नाश और तीनों पक्षों के अतिक्रमण म निश्चय ही मृत्यु होती है । स्वर के अभ्यास करने वाले को चाहिये कि एक १६ अगुल की लकड़ी लेवें जिसम

पृथ्वी पर अंगुल पर निशान रखे हों, उस लकड़ी को नाक के छिद्र के सामने रखके स्वर की परीक्षा करें यदि श्वास आठ अंगुल तक जाती हो चाहे वह बायां हो या दाहिना तो पृथ्वीतत्त्व उस समय चल रहा है ऐसा समझना चाहिये। १६ अंगुल तक जलतत्त्व, ४ अंगुल तक तेजस्तत्त्व, १२ अंगुल तक वायुतत्त्व और १ अंगुल तक आकाशतत्त्व को समझना चाहिये। पृथ्वीतत्त्व पीतवर्ण, जलतत्त्व श्वेतवर्ण, अग्नितत्त्व रक्तवर्ण, वायुतत्त्व नीलवर्ण और आकाश तत्त्व धूम्रवर्ण का होता है अथवा इनके ये वर्ण होते हैं ॥ ४८–५० ॥

पीतवर्णं चतुष्कोणं लमध्यं पृथिवीपुरम्।
वमध्यं षड्दलाकारं श्वेतं वारुणमण्डलम् ॥ ५१ ॥
रेफयुक्तं त्रिकोणं च रक्ताभं वह्निमण्डलम्।
अष्टपत्रं यमध्यस्थं हरितं वायुमण्डलम् ॥ ५२ ॥
हमध्यं वर्तुलाकारं धूम्राभं व्योममण्डलम्।
पञ्चतत्त्वेषु भेदोऽयं कथितः पूर्वसूरिभिः ॥ ५३ ॥
मारणं मोहनं स्तम्भं विद्वेषोच्चाटनं वशम्।
प्रेरणाकर्षणं क्षोभं भानुनाड्युदये कुरु ॥ ५४ ॥
शान्तिकं पौष्टिकं क्षेमं दिव्यौषधिरसायनम्।
योगाभ्यासादिकर्माणि कर्तव्यानि निशाकरे ॥ ५५ ॥
चन्द्रसूर्यस्वराभ्यासं ये कुर्वन्ति सदा नराः।
अतीतानागतं ज्ञानं तेषां हस्तगतं सदा ॥ ५६ ॥

इति सूक्ष्मस्वरोदयप्रकरणम्।

## इति श्रीब्रह्मयामलीयस्वरोदये नरपतिजयचर्यायां हंसचारो नाम द्वितीयोऽध्यायः ॥ २ ॥

पीतवर्णमिति। सुभिक्षप्रश्ने वा जितिप्रश्ने पृथ्वीतत्त्वेन लबीजयुक्तं पीतवर्णं चतुष्कोणं वस्तु वदेत्। वारुणमण्डलम् जलतत्त्वेन वबीजयुक्तं श्वेतवर्णं षट्कोणं वस्तु वदेत्। वह्निमण्डलम् अग्नितत्त्वेन रबीजयुक्तं रक्तवर्णं त्रिकोणं वस्तु वदेत्। वायुतत्त्वेन यबीजयुतं हरितम् अष्टकोणं वस्तु वदेत्। एवं व्योममण्डलम् आकाशतत्त्वेन हबीजयुतं धूम्रवर्णं वर्तुलाकारं वस्तु वदेत्। पञ्चतत्त्वेषु पृथिव्यादिपञ्चतत्त्वेषु पूर्वसूरिभिः कथितः। मारणमिति। स्पष्टम्। शान्तिकमिति। सुगमम्। चन्द्रसूर्येति सुगमम् ॥ ५१–५६ ॥

प्रश्नकर्त्ता के इच्छित वस्तुसम्बन्धी प्रश्न या मुष्टिगत वस्तु के बताने में पृथ्वी तत्त्व के उदय में ल बीज से युक्त पीलेवर्ण का चतुष्कोण वस्तु, जलतत्त्व के उदय में श्वेतवर्ण व बीज से युक्त षट्कोण वस्तु, अग्नितत्त्व ( तेज ) के उदय में र बीज से युक्त रक्तवर्ण त्रिकोणवस्तु, वायुतत्त्व में य बीजयुक्त हरे वर्ण का अष्टकोण वस्तु, आकाशतत्त्व में धूम्रवर्ण ह बीज से युक्त गोले आकार के वस्तु को कहना चाहिये। ऐसा पूर्व आचार्यों ने पाचो तत्त्वों के भेद को कहा है। दक्षिण स्वर के उदय में मारण, मोहन, वशीकरण, स्तम्भन, विद्वेषण, उच्चाटन, प्रेरणा, आकर्षण और क्षोभ इन कार्यों को करना चाहिये। शान्ति और पुष्टि के लिये तथा कुशल के लिये अनुष्ठान, औषधि तथा रसायन योगाभ्यास आदि कार्य चन्द्रस्वर ( वामस्वर ) के उदय म करना चाहिये। जो मनुष्य चन्द्रसूर्य के स्वरों का अभ्यास करता है उसे बीते हुये तथा आनेवाले सभी बातों का ज्ञान हस्तगत होता है[1] ॥ ५१–५६ ॥

इति नरपतिजयचर्यास्वरोदये संस्कृत हिन्दी टीकाद्वयोपेते
हंसचाराध्यायो द्वितीय ।



---

१ भेदा ये स्वरपत्रके निगदिता मेसर्गिका बालजा
ज्ञेया बालकुमारयौवनजरानैधन्यजम्यास्तथा।
ताञ्जानन्ति गुरूपदेशविधिना भेदप्रभेदाश्च य
ते जानन्ति फलं शुभाशुभमय कालत्रये निश्चितम् ॥ १ ॥
इद प्रथमचक्रम्।

## अथ सर्वतोभद्रचक्रप्रकरणम्

अथातः सम्प्रवक्ष्यामि चक्रं त्रैलोक्यदीपकम् ।
विख्यातं सर्वतोभद्रं सद्यः प्रत्ययकारकम् ॥ १ ॥
ऊर्ध्वगा दश विन्यस्य तिर्यग्रेखास्तथा दश ।
एकाशीतिपदं चक्रं जायते नात्र संशयः ॥ २ ॥
अकारादिस्वराः कोष्ठेष्वीशादिविदिशि क्रमात् ।
सृष्टिमार्गेण दातव्याः षोडशैवं चतुर्भ्रमम् ॥ ३ ॥
कृत्तिकादीनि धिष्ण्यानि पूर्वाशादि लिखेत् क्रमात् ।
सप्त सप्त क्रमादेतान्यष्टाविंशतिसंख्यया ॥ ४ ॥
अवकहडादिषु प्राच्यां मटपरताश्च दक्षिणे ।
नयभजखाश्च वारुण्यां गसदचलास्तथोत्तरे ॥ ५ ॥
त्रयस्त्रयो वृषाद्याश्च पूर्वाशादिक्रमाद्बुधैः ।
राशयो द्वादशैवं तु मेषान्ताः सृष्टिमार्गतः ॥ ६ ॥
शेषेषु कोष्ठकेष्वेवं नन्दादितिथिपञ्चकम् ।
वाराणां सप्तकं लेख्यं भौमाद्यं च क्रमेण वै ॥ ७ ॥
भौमादित्यौ च नन्दायां भद्रायां बुधशीतगू ।
जयायां च गुरुः प्रोक्तो रिक्तायां भार्गवस्तथा ॥ ८ ॥
पूर्णायां शनिवारश्च लेख्यं चक्रेऽत्र निश्चितम् ।
इत्येष सर्वतोभद्रविस्तारः कीर्तितो मया ॥ ९ ॥

अथेति । अथातोऽनन्तरम् सर्वतोभद्रनामकं चक्रं प्रवक्ष्यामि । सर्वतः भद्रं श्रेष्ठमिति सर्वतोभद्रम् । अस्मिन् चक्रे शुभं तथादि चक्रातोऽशुभं दर्शितं तथा शुभम् । च पुनः कीदृशं त्रैलोक्यदीपकं दीप इव दीपकं त्रैलोक्यं दीपयति प्रकाशयति । त्रैलोक्यदीपकं विख्यातं प्रसिद्धम् । सद्यः प्रत्ययकारकम् सद्यस्त-

त्मणादेव विचार्यमाणशुभाशुभप्रतीतिजनकम्। ऊर्ध्वग इति। सुगमम्। अकारादि इति। तत्र कोष्ठे ईशानादिविदिशि कोष्ठेषु सृष्टिमार्गेण प्रदक्षिणक्रमेण अकारादिषोडशस्वरा क्रमाल्लेख्या। एव चतुर्भ्रम चतुरावृत्त यथा स्यात्तथा बोद्धव्यम् अर्थात् अकार ईशानकोणे। आकार अग्निकोणे। इकारो नैर्ऋत्ये। ईकारो वायव्ये। पुनरुकार ईशानकोणेऽकारस्याध कोष्ठके। ऊकार आग्नेये आकारस्याध कोष्ठके एव षोडशस्वरान् ईशानादिचतुष्कोणेषु विन्यसेदिति तात्पर्य। कृत्तिकादीनीति। तत पूर्वाशादिक्रमात् पूर्वादिक्रमेण कृत्तिकादीनि सप्त सप्त धिष्ण्यानि क्रमात् अष्टाविंशतिसख्यया लेख्यानि। स यथा पूर्वस्या प्रथमपक्तौ कृत्तिकात. श्लेषान्त यावत्सप्तऋक्षाणि लेख्यानि। एव मघादीनि सप्त नक्षत्राणि दक्षिणस्या लिखेत्। मैत्रादीनि सप्तभानि पश्चिमाया लिखेत्। धनिष्ठादीनि सप्त उत्तरस्या लिखेत। अत्रोत्तराषाढाया अन्त्यपाद श्रवणस्याद्यघटीचतुष्टय यावदभिजिन्नामनक्षत्रम् एवमष्टाविंशति'। अवकहडा इति। एव प्राच्या दिशि ऋक्षाध पक्तौ अ-व-क-ह-ड, दक्षिणस्या दिशि ऋक्षाध पक्तौ म ट प र त, पश्चिमाया दिशि न-य भ-ज-खा, उत्तरस्या दिशि ग-स-द-च-ला लेख्या। त्रयस्त्रय इति। सृष्टिमार्गत अनुक्रमेण पूर्वाशादि समारभ्य वृषाद्यास्त्रयस्त्रयो मेषान्ता द्वादशराशय क्रमात् बुधै लेखनीया। अत्रेत्थमन्वेय वृषादित्रीन् राशीन् पूर्वदिक् तृतीयपक्तौ लिखेत्। एव सिंहादित्रीन् राशीन् दक्षिणदिक्तृतीयपक्तौ वृश्चिकादित्रीन् राशीन् पश्चिमदिक्तृतीयपक्तौ, कुम्भादित्रीन् राशीन् उत्तरदिक्तृतीयपक्तौ सल्लिखेदिति। शेषेषु इति। एव शेषेषु पचसु कोष्ठेषु नदादितिथि (नदा, भद्रा, जया, रिक्ता, पूर्णा) पचकम्। स यथा प्रतिपत्षष्ठ्येकादश्य पूर्वकोष्ठे, द्वितीयासप्तमीद्वादश्यो दक्षिणदिशि कोष्ठे तृतीयाष्टमीत्रयोदश्य पश्चिमदिक्कोष्ठे, चतुर्थीनवमीचतुर्दश्य उत्तरकोष्ठे तथा च पञ्चमीदशमीपञ्चदश्यो मध्यकोष्ठे लेख्यम्। एव भौमादित्यक्रमेण वाराणा सप्तक लेख्यम्। भौमादित्यौ इति। नन्दाया प्रतिपत्स्थाने भौमादित्यौ वारौ, भद्राया द्वितीयास्थाने बुधचन्द्रौ, जयाया तृतीयास्थाने गुरु, रिक्ताया चतुर्थीस्थाने भृगु, पूर्णाया पञ्चमीस्थाने शनिवार लेखनीय। एव चक्रे पूर्वसूरिभि निश्चितम् कृतम्। एप मया सर्वतोभद्रविस्तार कीर्तित ॥ १-६ ॥

अब मैं त्रिभुवन का दीपक सब प्राणियों के शुभ अशुभ को कहने वाला प्रसिद्ध सर्वतोभद्र नामक चक्र को कहता हूँ। दस खड़ी रेखा और दस तिरछी रेखाओं को लिखे ऐसा लिखने से ८१ कोष्ठ का चक्र होता है। उन कोष्ठों में ईशानादि क्रम से कोण के कोष्ठों में अकारादि अ० आ० इत्यादि सोलह स्वरों को लिखे। इस प्रकार प्रत्येक कोण में चार कोष्ठ में स्वर होंगे। स्वरों के आगे के कोष्ठ से कृत्तिका से आरम्भ करके सात सात नक्षत्र पूर्व आदि दिशाओं में २८ नक्षत्रों को लिखें। अर्थात्

कृत्तिका से श्लेषा पर्यन्त पूर्व में, मघा से विशाखा तक दक्षिण में, अनुराधा से श्रवण तक पश्चिम में और धनिष्ठा से भरणी पर्यन्त उत्तर में लिखें। नक्षत्रपंक्ति के नीचे पूर्वादि दिशाओं में क्रम से अवकहड आदि पाँच वर्णों को लिखें। अर्थात् अ० व० क० ह० ड पूर्व के पाँच कोष्ठों में, म० ट० प० र, त दक्षिण में, न० य० भ० ज० ख पश्चिम में, और ग० स० द० च० ल उत्तर दिशा में लिखे। इनके नीचे तीन कोष्ठों में पूर्वादिक्रम से वृषादि तीन तीन राशियों को मेष पर्यन्त लिखें अर्थात् वृष, मिथुन, कर्क को पूर्व में, सिंह, कन्या, तुला को दक्षिण में, वृश्चिक धनु, मकर को पश्चिम और कुम्भ, मीन, मेष को उत्तर में लिखें। शेष कोष्ठों में नन्दा आदि संज्ञाओं की पाँच तिथियाँ भौम, सूर्य आदि सात वारों को पूर्व आदि दिशाओं में लिखें। अर्थात् जिस कोष्ठ में नन्दा तिथि है उसी में भौम और रविवार, भद्रा के कोष्ठ में बुध, चन्द्रवार। जया के कोष्ठ में गुरुवार, रिक्ता के कोष्ठ में शुक्रवार और मध्य के कोष्ठ में पूर्णातिथि और शनिवार को लिखें इस प्रकार से सर्वतोभद्रचक्र का विस्तार होता है ॥ १–९ ॥

सर्वतोभद्रचक्रम्

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अ | कृ | रो | मृ | आ | पु | पु | श्ले | आ |
| भ | उ | अ | व | क | ह | ड | ऊ | म |
| अ | ल | लृ | वृ | मि | क | लॄ | [illegible] | पू |
| रे | च | मे | ओ | १ र ६ म ११ | औ | सिं | ट | उ |
| उ | द | मी | ४ शु ९ १४ | ५ १० १५ श | ३ च ७ १२ बु | क | प | ह |
| पू | स | कु | अ | ३ गु ८ १३ | अ | तु | र | चि |
| श | ग | ऐ | म | ध | वृ | ठ | त | स्वा |
| ध | श | ख | ज | भ | य | न | ऋ | वि |
| श्र | अ | अ | उ | पू | मू | ज्ये | अ | वि |

ऊर्ध्वदृष्टी च भौमार्कौ केकरौ शुभभार्गवौ।
समदृष्टी च जीवेन्दू शनिराहू रवोदृशौ ॥ १० ॥

नीचस्थितोर्ध्वदृष्टिश्च उच्चैरधो निरीक्षयेत् ।
समश्च पार्श्वतो दृष्टिस्त्रिधा दृष्टिः प्रकल्प्यते ॥ ११ ॥
शन्यर्कराहुकेत्वारा क्रूराः शेषा शुभग्रहाः ।
क्रूरयुक्तो बुधः क्रूर क्षीणचन्द्रस्तथैव च ॥ १२ ॥
यस्मिन्नृक्षे स्थितः खेटस्ततो वेधत्रय भवेत् ।
ग्रहदृष्टिवशेनात्र वामसम्मुखदक्षिणे ॥ १३ ॥
भुक्तं भोग्य तथा क्रान्त विद्ध क्रूरग्रहेण च ।
शुभाशुभेषु कार्येषु वर्जनीय प्रयत्नतः ॥ १४ ॥
वक्रगे दक्षिणा दृष्टिर्वामदृष्टिश्च शीघ्रगे ।
मध्यचारे तथा मध्या ज्ञेया भौमादिपञ्चके ॥ १५ ॥

ऊर्ध्वेति । स्पष्टम् । नीचस्थितो इति । सुगमम् । शन्यर्केति । अत्र ग्रहाणा क्रूरसौम्यविभागमाह । तत्र चन्द्रस्य क्षीणत्व कृष्णैकादशीत शुक्लपक्षीय पञ्चम्यन्त यावज्ज्ञेयमन्यत् सुगमम् । यस्मिन्नृक्षे इति । यस्मिन् ऋक्षे नक्षत्रे खेटो ग्रह, स्थित ततः ग्रहदृष्टिवशेन अग्रे वक्ष्यमाणेन वामसम्मुखदक्षिणे वेधत्रय भवेत् । भुक्त भोग्यम् इति । यन्नक्षत्र क्रूरग्रहेण भुक्त भुज्यमान, भोग्य, आक्रान्त यच्च विद्ध एतच्चतुष्टय शुभाशुभकार्येषु प्रयत्नत वर्जनीय । वक्रगे इति । भौमादिपञ्चके वक्रगे वक्रगामिनि दक्षिणा दृष्टि दक्षिणभागे दृष्टिर्भवति । शीघ्रगे शीघ्रगतौ वामदृष्टिर्वामभागे दृष्टिर्भवति । मध्यचारे प्रकृतगतौ मध्या सम्मुखे दृष्टिर्ज्ञेया ॥ १०–१४ ॥

भौम और सूर्य की ऊर्ध्व ( ऊपर ) दृष्टि होती है, बुध और शुक्र की तिर्यग् ( तिरछी ), गुरु और चन्द्रमा की समदृष्टि, और शनि तथा राहु की अधो ( नीचे ) दृष्टि होती है । ग्रह अपने नीच राशि में रहता है तो ऊर्ध्व दृष्टि होती है, उच्च राशि में अध दृष्टि, सम अर्थात् उच्च नीच के मध्य में रहता है तो पार्श्व अर्थात् तिरछी दृष्टि होती है इस प्रकार ग्रहों की तीन दृष्टियां होती हैं । शनि, राहु, केतु और मंगल ये क्रूरग्रह हैं । शेष सभी शुभग्रह हैं, क्रूरग्रह से युक्त बुध भी क्रूर होता है तथा क्षीणचन्द्रमा भी क्रूरग्रह होता है । जिस नक्षत्र पर ग्रह रहता है उससे ग्रह के दृष्टिवश से वाम, सम्मुख और दक्षिण ये तीन प्रकार के वेध होते हैं । क्रूरग्रह से भोगा हुआ, भोग्य ( जिस पर ग्रह जानेवाला है ), जिस पर ग्रह है और जो क्रूर ग्रह वेध करता हो ये चारो नक्षत्र शुभ तथा अशुभ कार्य में निन्दित हैं । यदि ग्रह वक्री हो तो दक्षिण दृष्टि, शीघ्रगति ग्रह की वामदृष्टि और मध्यमागति के तुल्य गति

वाले ग्रह की समता ( सम ) दृष्टि होती है किन्तु यह केवल भौमादि ५ ग्रहों की ही होती है ॥ १०–१५ ॥

सूर्यमुक्ता उदीयन्ते सूर्यग्रस्तास्तगामिनः ।
ग्रहाद्वितीयगे सूर्ये स्फुरद्बिम्बाः कुजादयः ॥ १६ ॥
समा तृतीयगे ज्ञेया मन्दा भानौ चतुर्थगे ।
वक्राः स्यात्पञ्चषष्ठेऽर्के त्वतिवक्राष्टसप्तमे ॥ १७ ॥
नवमे दशमे भानौ जायते कुटिला गतिः ।
द्वादशैकादशे सूर्ये भजते शीघ्रतां पुनः ।
अदृश्यतां पुनर्लोके व्रजन्त्यर्कगता ग्रहाः ॥ १८ ॥
राहुकेतू सदा वक्रौ शीघ्रगौ चन्द्रभास्करौ ।
गतेरेकस्वभावत्वादेषां दृष्टित्रयं सदा ॥ १९ ॥
क्रूरा वक्रा महाक्रूराः सौम्या वक्रा महाशुभाः ।
स्युः सहजस्वभावस्थाः सौम्याः क्रूराश्च शीघ्रगाः ॥ २० ॥

सूर्यमुक्ता इति । कुजादयः भौमादयः सूर्यमुक्ताः सूर्येण मुक्ताः स्वगत्या अग्रिमराशिगमनेन वा सूर्यात् मुक्ताः बहिर्गतास्ते उदीयन्ते उदिता भवन्ति, सूर्यग्रस्ताः सूर्येण सहैकराशिस्था विदितकालांशान्तर्गताः ( भास्करात् नगगुणाः गुणचन्द्राः सूर्ययो तिथिमनुस्त्रिथयोऽङ्गादिनि ) पठितकालांशान्तर्गताश्च भवन्ति तदा अस्ता भवन्ति । ग्रहात् द्वितीयगे द्वितीयराशौ सूर्ये सति पूर्वराशिस्था ग्रहाः स्फुरद्बिम्बाः शीघ्रगा भवन्ति । ग्रहात् तृतीयगे तृतीयराशौ सूर्ये समाः प्रकृतगतयः भवन्ति, चतुर्थगे ग्रहाच्चतुर्थराशौ सूर्ये सति मन्दगतयः भवन्ति । पञ्चमे षष्ठे वा भानौ स्थिते ग्रहाः वक्रगतयः, सप्तमे वा अष्टमे सूर्ये अतिवक्रा भवन्ति । नवमे वा दशमे सूर्ये कुटिला सहजा गतिः भवति एवं ग्रहाद् द्वादशे वा एकादशे सूर्ये पुनः शीघ्रता शीघ्रगतिश्च भवति । पुनः अर्कगता ग्रहाः लोके संसारे अदृश्यता भवन्ति । राहुकेतू इति । राहुकेतू सदैव वक्रिणौ तथा चन्द्रभास्करौ शीघ्रगौ अत एव चन्द्रराहुकेतुसूर्याः गतेरेक एव स्वभावत्वात्तृभिरेव दृष्टिभिर्वामसम्मुखदक्षिणाभिरेव प्रकारैः सदा पश्यन्ति । क्रूरा इति । क्रूराः पापग्रहाः वक्रगतयः सन्तो महाक्रूराः । सौम्याः शुभग्रहाः वक्राः सन्तो महाशुभाः सहजस्वभावस्थाः सौम्याः शीघ्रगाः सन्तः शुभं स्वस्वभावेन कुर्वन्ति । किन्तु वक्राः सन्तो यथानिशुभं कुर्वन्ति । एवं क्रूराः शीघ्रगाः स्वस्वभावेन स्थिता भवन्ति ॥ १६–२० ॥

सूर्य से मुक्त अर्थात् सूर्य से अलग कालांश से अधिक अन्तर पर जो ग्रह होते हैं वे उदय होते हैं, सूर्य के साथ अर्थात् कालांश तुल्य अन्तर के अन्दर ही जो ग्रह होते हैं वे अस्त होते हैं, सूर्य से दूसरे राशि पर जो ग्रह होते हैं वे शीघ्रगामी होते हैं किन्तु यह भौमादि पाँच ग्रह के ही लिये है। ग्रह से सूर्य तीसरे स्थान में हो तो ग्रह समगति, चौथे राशि पर मन्दगति, पाँचवें, छठें राशि पर वक्रगति और सातवें आठवें राशि पर अतिवक्र गति होता है। ग्रह से सूर्य नवें या दशम स्थान में हो तो ग्रह कुटिला ( सहज ) गति, १२ वें या ११ वें स्थान में हो तो ग्रह शीघ्रगति होता है, इसके बाद पुनः सूर्य के साथ होने से अस्त हो जाता है। राहु और केतु हमेशा वक्रगति और सूर्य तथा चन्द्रमा हमेशा शीघ्रगति ही होते हैं। दोनों के एक ही गति और स्वभाव होने से क्रमसे इनकी ३ दृष्टियाँ वाम, दक्षिण और सम्मुख ही होती हैं ॥ १९–२० ॥

अवर्णादिस्वरौ द्वौ द्वावेकवेधे द्वयोर्व्यधः।
स्वरयुक्तात्मनोर्वेधश्चानुस्वारविसर्गयोः ॥ २१ ॥
बवौ शसौ षखौ चैव ज्ञेयो ङञौ परस्परम्।
एकेन द्वितयं ज्ञेयं शुभाशुभखगव्यधे ॥ २२ ॥
घङछाः पणठाश्चैव धफढास्थझञास्तथा।
एतत्त्रिकं त्रिकं विद्धं विद्धैः कपदभैः क्रमात् ॥ २३ ॥
घङञा रौद्रगे वेधे पणठा हस्तगे ग्रहे।
धफढाः पूर्वाषाढाया थझञा भाद्र उत्तरे।
अवर्णादिस्वरद्वन्द्वेष्वेकवेधे द्वयोर्व्यधः।
युक्तस्वरात्मके वेधे त्वनुस्वारविसर्गयोः ॥ २७ ॥

अवर्णादिस्वरौ इति। अवर्णादि द्वौ द्वौ स्वरौ अ आ, इ ई, इत्यादयः सन्ति तेषां मध्ये एकस्य वेधेन द्वयोरपि वेधो ज्ञातव्यः। स्वरयुक्त आत्मा ययोरनुस्वारविसर्गयोस्तयोरपि वेधः। तत्रापि एकवेधेन द्वयोरपि वेधो ज्ञातव्यः। यतो द्वयोरपि अकारसहितावुच्चार्येते। व० बौ० श० सौ इति। अत्र ग्रन्थे बवौ शसौ षखौ ङ ञौ द्वौ द्वौ वर्णौ तुल्यौ ज्ञातव्यौ। तत्र शुभाशुभ-खगव्यधे एकेन वेधे द्वितयं विद्धं ज्ञेयम्। घ-ङ-छा इति। क-प-भ-दे विद्धे क्रमात् घ-ङ-छा, प-ण-ठा ध-फ-ढा, थ-झ-ञा एतत् त्रिकं त्रिकं विद्धं भवति। यथा ककारे विद्धे घ-ङ-छा वर्णा विद्धाः। पकारे विद्धे प-ण-ठा विद्धाः, भकारे विद्धे ध-फ-ढा विद्धाः। दकारे विद्धे थ-झ-ञा विद्धाः। घ-ङ-

शुभग्रह निष्फल देता है और शुभग्रह से युक्त शुभग्रह अत्यन्त शुभफल देता है। सूर्य वेध करता हो तो मन में सन्ताप, भौम से द्रव्यहानि, शनि से रोग और पीड़ा, राहु और केतु वेध करते हों तो विघ्न होता है। चन्द्रमा वेध करता हो तो मिश्रित होता है। शुक्र वेध करता हो तो स्त्री से सुख, बुध वेध करता हो तो बुद्धि में वृद्धि गुरु वेध करता हो तो सभी प्रकार के फल होते हैं। यदि नाम के नक्षत्र से वैनाशिक नक्षत्र ( २३ वें नक्षत्र ) को शुभ और पाप दोनों वेध करते हों तो राग और धन का नाश होता है। यदि तीनों[1] को अर्थात् वैनाशिक, सामुदायिक और सांघातिक नक्षत्रों को दोनों ग्रह वेध करते हों तो मृत्यु होती है ॥ २९-३३ ॥

स्वक्षेत्रस्थे बलं पूर्णं पादोनं मित्रभे गृहे ।
अर्द्धं समगृहे ज्ञेयं पादं शत्रुगृहे स्थिते ॥ ३४ ॥
इदं च सौम्यक्रूराणां बलं स्थानवशात्मकम् ।
एतदेव बलं वेध्यं सौम्ये क्रूरे विपर्ययात् ॥ ३५ ॥
स्थानवेधसमायोगे यत्संख्यं जायते बलम् ।
तत्संख्यं वेध्यवस्तूनां फलं ज्ञेयं विचक्षणैः ॥ ३६ ॥
ग्रहाः क्रूरास्तथा सौम्या वक्रमार्गोच्चनीचगाः ।
स्थानं च वेध्यमित्येवं बलं ज्ञात्वा फलं वदेत् ॥ ३७ ॥
वक्रग्रहे फलं क्षिप्रं त्रिगुणं स्वोच्चसंस्थिते ।
स्वभावजं फलं शीघ्रे नीचस्थो निष्फलो ग्रहः ॥ ३८ ॥

स्वक्षेत्रस्थे इति । स्वक्षेत्रस्थे स्वराशिस्वद्रेष्काणस्थे ग्रहे पूर्णं बलं भवति । तत्र सूर्यादीनां राशयः । मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाधिपः । बुधः कन्यामिथुनयोः कर्कटस्य तु चन्द्रमा । सिंहस्याधिपतिः सूर्यः शनिर्मकरकुम्भयोः । स्यान्मीनधनुषोर्जीवः कथिता गणकोत्तमैः ॥ मित्रादिव्यवस्थाया वराहमिहिराचार्यः—शत्रू मन्दसितौ समश्च शशिजो मित्राणि शेषा रवेस्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः । जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्की समौ मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥ सूरेः सौम्यसितावरी रविसुतो मध्योऽपरे त्वन्यथा सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी । शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयस्तत्काले च भ व्यत्यासमद्नव्याधारनन्तुस्थिता ॥ सुहृदस्त्वन्यथाऽन्य । अथवा स्वगृह । इदं च सौम्य इति । इदं पूर्णमित्यादि बलं सौम्यक्रूराणां सौम्यानां क्रूराणां च स्थान

[1] दूसरा अध्याय का ६४ वां श्लोक देखो ।

वशात् सम तुल्यम्। एतदेव बलं सौम्ये क्रूरे विपर्ययाद्वैपरीत्याद्बोध्यम्। अर्थात्क्रूरे स्वगृहे पादैक, 'मित्रगृहेऽर्धं' समगृहे चतुर्थभागहीन शत्रुगृहे पूर्णबलमिति। स्थानवेधे इति। स्थानवेधे स्वगृहाद्यस्थानवेधसमायोगे वेधसम्भवे यत्सख्यक पूर्णत्वादिक बल जायते विचक्षणे तत्सख्य वेध्यवस्तूना शुभमशुभ वा फल ज्ञेयम्। ग्रहा क्रूरास्तथा इति। सुगमम्। वक्रग्रहे सौम्ये क्रूरे वा द्विन द्विगुणितम् एवमुच्चाने त्रिगुणित बलम्। एवमन्यदपि ज्ञेयम्। यादृग्बली ग्रहो यन्नक्षत्रादि विध्यति तादृग्वेधजनित फल ददाति ॥ ३४–३८ ॥

यदि ग्रह अपने राशि में हो तो पूर्णबली होता है। अपने मित्र की राशि म हो तो चतुर्थांशोन बल, सम की राशि में हो तो आधाबल, और शत्रु की राशि म हो तो चतुर्थांश ( चौथाइ ) बल पाता है। यह बल शुभग्रह और पापग्रह का स्थान से समान है किन्तु पापग्रह का बल विलोम जानना चाहिये अर्थात् पापग्रह अपनी राशि में हो तो चौथाइ मित्र की राशि में हो तो आधा, सम की राशि में हो तो चौथाई कम और शत्रु की राशि में हो तो पूर्णबली होता है। स्थान स्वगृहादि के वध म जितनी संख्या बल की प्राप्त हो उतने ही सत्यक वस्तु का शुभ अशुभ फल कहना चाहिये। क्रूरग्रह या शुभग्रह हो वह वक्री हो, मार्गी हो, उच्च, म हो अथवा नीच म हो यही स्थान कहे जाते हैं, इन स्थानों के बल को जानकर फल कहना चाहिये। यदि ग्रह वक्री हो तो दूना फल, उच्च म हो तो तिगुना, शीघ्रगति हो तो स्वभाव के अनुसार और नीच में हो तो आधा फल देता है ॥ ३४–३८ ॥

तिथिराश्यंशनक्षत्रं विद्धं क्रूरग्रहेण यत्।
सर्वेषु शुभकार्येषु वर्जयेत्तत्प्रयत्नत ॥ ३९ ॥
न नन्दति विवाहे च यात्रायां न निवर्तते।
न रोगान्मुच्यते रोगी वेधवेलाकृतोद्यमः ॥ ४० ॥
रोगकाले भवेद्वेधः क्रूरखेचरसम्भवः।
वक्रगत्या भवेन्मृत्युः शीघ्रे याप्या रुजान्वित ॥ ४१ ॥
वेधस्थाने रणे भङ्गो दुर्गे खण्डिः प्रजायते।
कुविप्रवेशन तत्र योधघातश्च तत्र वै ॥ ४२ ॥

तिथिराश्यश इति। यत् तिथिराशिरशक नक्षत्र च क्रूरग्रहेण पापग्रहेण विद्ध तत् समस्त सर्वेषु शुभकार्येषु प्रयत्नत वर्जयेत्। न नन्दति इति। वेधवेलायां रोगोत्पत्तौ रोगी रोगान्न मुच्यते अन्यत्स्पष्टम्। रोगकाले इति। रोगकाले समुत्पन्नरोगसमये क्रूरखेचरसम्भव पापग्रहकृतो वेध स चेद् वक्रगतिर्भवेत्तदा रोगिणो मृत्युर्भवति। शीघ्रेऽपापे वेधकर्त्तरि याप्यरुजा दीर्घसमयायाने

रोगेणान्वित पुरुषो भवति। वेधस्थाने इति। वेधस्थाने रणे भङ्गो भवेत्। यत्र स्थाने पूर्वादिदिक्क्रमेण सर्वतोभद्रचक्रे वेधो भवति तत्र संग्रामे कोटे सैन्ये वा भङ्गो भवति। दुर्गे खण्डिः दुर्गस्यापि विद्धनक्षत्रदिग्वेध खण्डि खण्डनं जायते। कलिप्रवेशन नेत्रदिशि कलिप्रवेशनम् कुर्यात्। यथि सौप्ति काभिघातो 'डाक' इति प्रसिद्धस्तदर्थं प्रवेशनम्। योधघातश्च तत्र च। योध-नक्षत्रात् यत्राङ्गनामवर्णो विद्ध पुरुषस्य दुर्गो देशो पापग्रहविद्धो भवति तत्राश्व प्रहारो भवतीत्यूहनीयम् ॥ ३९–४२ ॥

जो तिथि, राशि, अंश, नक्षत्र, क्रूरग्रह से वेधित हो उसे सभी शुभ कार्यों में त्याग देना चाहिये। वध समय में विवाह करने से उसमें सफलता नहीं होती, यात्रा करने से मनुष्य उससे लौटता नहीं है, और रोग उत्पन्न होने से रोगी रोग से मुक्त नहीं होता है। रोग समय में यदि क्रूरग्रह का वध होता हो तो रोगी की मृत्यु होती है। शुभग्रह से वेध होता हो तो दीर्घरोगी होता है। वधस्थान में संग्राम करने से भंग, दुर्ग में वेध स्थान में रण करने से दुर्ग भंग होता है। सोते हुये पर घात करने में सफलता और योधा के नक्षत्र से वध जिस नक्षत्र अंग में पड़ता हो उस अंग में घात करने से विजय होती ॥ ३९–४२ ॥

यत्र पूर्वादिकाष्ठायां वृषराश्यादिगो रविः।
सा दिगस्तमिता ज्ञेया तिस्रः शेषा सदोदिताः ॥४३॥
ईशानस्थाः स्वराः प्राच्यां ज्ञेया आग्नेयगा यमे।
नैर्ऋत्यस्थास्तु वारुण्यां वायव्या सौम्यगा मताः ॥४४॥
नक्षत्राणि स्वरा वर्णा राशयस्तिथयो दिशः।
ते सर्वेऽस्तं गता ज्ञेया यत्र भानुस्त्रिमासिकः ॥४५॥

यत्रेति। यत्र यस्यां पूर्वादिकाष्ठायां पूर्वदक्षिणपश्चिमोत्तरदिशि प्रत्येक वृषराश्यादिगो रविः सा दिक् अस्तमिता ज्ञेया। शेषा तिस्रः सदोदिता ज्ञेया। ईशानस्था इति। ईशानादिकोणस्थिता स्वरा अ-उ-लृ-ओ एते चत्वारः प्राच्यां पूर्वदिक्कमलस्था ज्ञेयास्तस्यामस्तमितायां तदस्तमिता ज्ञातव्या। एवमाग्नेयादिकोणगताश्चत्वारः स्वरा दक्षिणपश्चिमोत्तरदिक्कमलस्था ज्ञेयाः। नक्षत्राणि इति। यत्र त्रिमासिको राशित्रयभोगक्रमेण सूर्योऽवस्थितस्तत्र तत्र स्थित नक्षत्रस्वरवर्णराशितिथ्यादिका सर्वं अस्तमिता ज्ञातव्या इति ॥ ४३–४५ ॥

चक्र में पूर्वादि दिशाओं में वृष आदि तीन तीन राशियाँ लिखी हैं इन राशियों में जब सूर्य रहता है तो दिशायें अस्त होती हैं और शेष तीन दिशा उदय होती है। जैसे वृष, मिथुन, कर्क राशि पर सूर्य के रहने से ज्येष्ठ, आषाढ़, श्रावण मास

में पूर्वदिशा अस्त होती है और शेष दक्षिण, पश्चिम और उत्तर दिशा उदय रहती है। इसी प्रकार अन्य दिशाओं में भी समझना चाहिये। ईशान कोण में स्थित स्वरों अ-उ-लृ-ओ को पूर्वदिशा में समझना चाहिये। यदि पूर्वदिशा अस्त हो तो स्वरों को भी अस्त समझना चाहिये। अग्निकोण के स्वरों को दक्षिण दिशा में, नैर्ऋत्य कोण के स्वरों को पश्चिम में और वायव्य कोण के स्वरों को उत्तरदिशा में समझना चाहिये। जिस दिशा में त्रैमासिक सूर्य हो उस दिशा के नक्षत्र, स्वर, वर्ण, राशि, तिथि और दिशा अस्त होते हैं ॥ ४३-४५ ॥

नक्षत्रेऽस्ते रुजो वर्णे हानिः शोकः स्वरेऽस्तगे।
राशौ विघ्न तिथौ भीति पञ्चास्ते मरणं ध्रुवम् ॥ ४६ ॥
यात्रायुद्ध विवादश्च द्वारं प्रासादहर्म्ययोः।
न कर्तव्यं शुभं चान्यदस्ताशाभिमुखं नरैः ॥ ४७ ॥
अस्ताशायां स्थितं यस्य यदा नामाद्यमक्षरम्।
तदा तु सर्वकार्येषु ज्ञेयो दैवहतो नरः ॥ ४८ ॥
कवौ कोटे तथा द्वंद्वे चातुरंगे महाहवे।
उद्यमोस्तंगतैर्योधैर्वर्जनीयो जयार्थिभिः ॥ ४९ ॥
नक्षत्राभ्युदिते पुष्टिर्वर्णे लाभः स्वरे सुखम्।
राशौ जयस्तिथौ तेजः पदाप्तिः पचकोदये ॥ ५० ॥

नक्षत्रेऽस्ते इति। सुगमम् यात्रायुद्धम इति। शुभ यात्रादिकर्म। अन्यदशुभ मारणादिक कर्म। अस्ताशाभिमुखमस्तदिगभिमुख नरैर्न कर्त्तव्यम्। शेष सुगमम्। अस्ताशायाम् इति। यस्य पुरुषस्य नामाद्यक्षरमस्ताशाया स्थित स नरो दैवहतो ज्ञेय। अन्यत्स्पष्टम्। कवौ कोटे इति। यस्य योधस्य नक्षत्राणि स्वरा वर्णा राशय अस्तगता भवन्ति ते अस्तगता ज्ञेया। तै अस्तगतै योधै जयार्थिभि कोटयुद्ध द्वन्द्वयुद्ध वर्जयेत्। चातुरङ्गे महाहवे न तिष्ठेत। उद्यमश्च वर्जनीय न कर्त्तव्य। नक्षत्रेऽभ्युदिते इति स्पष्टम् ।४६ ५०।

नक्षत्र अस्त हो तो रोग, वर्ण अस्त हो तो हानि, स्वर अस्त हो तो शोक, राशि अस्त हो तो विघ्न, तिथि अस्त हो तो भय होता है और पाँचों नक्षत्र आदि उपर्युक्त अस्त हों तो निश्चय ही मृत्यु होती है। अस्त दिशा के सम्मुख यात्रा युद्ध, विवाद, प्रासाद और मकान का दरवाजा न करे और अशुभ कार्य मारण आदि भी न करे। जिस पुरुष के नाम का आदि अक्षर अस्त दिशा में हो तो वह पुरुष सभी कार्यों में दैवहत होता है। जिस योधा का नक्षत्र, स्वर, वर्ण और राशि अस्त हों वह अस्तङ्गत

जो चरादि प्रश्नकालिक लग्न हों उनका जो फल प्रश्नकाल में कहा गया वही फल ज्यौतिषी को राशियों के स्वभाव के अनुसार कहना चाहिये। जिस पुरुष का अक्षर, तिथि, स्वर, राशि और नक्षत्र पाँचों क्रूर ग्रह से विद्ध हों उसकी मृत्यु होती है इसमें सन्देह नहीं है। जिस मण्डल ( ग्राम समूह ), नगर, देवालय, किला, राजधानी के आधारर उभयत्र क्रूर ग्रह से वेधित हों तो व निश्चय ही नाश को प्राप्त होते हैं॥

कृत्तिकादित्रिकाद्ये मे क्रूरविद्धे च कूर्मतः।
देशा नाभिस्थदेशाद्या विनश्यंति यथाक्रमम्॥ ५५॥
कृत्तिकाया तथा पुष्ये रेवत्या च पुनर्वसौ।
विद्धे सति क्रमाद्वेधो वर्णेषु ब्राह्मणादिषु॥ ५६॥
तैलं भाण्डं रसो धान्यं गजाश्वादिचतुष्पदम्।
सर्वं महर्घतां याति यत्र क्रूरो व्यवस्थितः॥ ५७॥
क्रूरवेधसमायोगे यस्योपग्रहसम्भवः।
तस्य मृत्युर्न सन्देहो रोगाद्वाथ रणेपि वा॥ ५८॥
सूर्यभात्पञ्चमं धिष्ण्यं ज्ञेयं विद्युन्मुखाभिधम्।
शूलं चाष्टमभं प्रोक्तं सन्निपातं चतुर्दशम्॥ ५९॥
केतुरष्टादशे प्रोक्त उल्का स्यादेकविंशतौ।
द्वाविंशतितमे कम्पस्त्रयोविंशे च वज्रकम्॥ ६०॥
निर्घातश्च चतुर्विंशे उक्ता अष्टावुपग्रहाः।
स्वस्थाने विघ्नदाः प्रोक्ताः सर्वकार्येषु सर्वदा॥ ६१॥

कृत्तिकादित्रिकाद्ये इति। कूर्मत धर्मचक्रे कृत्तिकादित्रिकाद्ये यत्र कृत्तिकादित्रीणि भानि कूर्मस्य नवसु शरीरभागेषु न्यस्तानि तत्र तादृशे भे नक्षत्रे क्रूरवेधे सति नाभिस्थदेशाद्या देशा विनश्यन्ति। अयमाशय—सर्वे देशा विनाशं न यान्ति। कृत्तिकादित्रिनक्षत्रविद्धे नाभ्युक्तदेशाना मध्ये ( साकेत-मिथिलाचम्पावत्यादीना ) यस्य यस्य वर्णा स्वराद्य पञ्चक्रूरे विद्धा भवन्ति स स देशो विनाशं याति। कृत्तिकायाम् इति। कृत्तिकापुष्यरेवतीपुनर्वसुनक्षत्र चतुष्टय वेधे सति ब्राह्मणादिषु ब्राह्मणक्षत्रियवैश्यशूद्रेषु वर्णेषु क्रमाद्वेधो भवति। यथा कृत्तिकाया विद्धाया ब्राह्मण विध्यति। स चन्द्रशुभदृष्टस्तदा ब्राह्मणाना शुभमन्यथाऽशुभं ज्ञेयम्। एवं पुष्ये विद्धे क्षत्रिये रेवत्या वैश्ये पुनर्वसौ शूद्रे शुभाशुभफलं ज्ञातव्यम्। उक्तं च वराहेण—पूर्वात्रय सानलमग्रजाना राज्ञां तु पुष्येण सहोत्तराणि। सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवलानाम्॥

आदित्यहस्ताभिजिदश्वभानि प्रणिगृज्जनाना प्रपन्ति भानि। मूलत्रिनेत्रानिल याम्णानि भान्युप्रजाते प्रभविष्णुताया ॥ सौम्येन्द्रचित्रावसुनैत्रतानि सेराचन स्वाम्यमृपागतानि। माषं निशाखाश्रवणाभरण्यश्चाण्टालजातेरपि निर्दिशन्ति॥ सौल्य[1] भाण्डम् इति। यस्य सौल्य तुलनार्हं द्रव्य भाण्ड रत्नानि, रसो मधुरादि गजाश्वचतुष्पदादे नामनभा वर्णं वा क्रूरो व्यवस्थित वेधको वा अर्थात् यस्य यस्य द्रव्यस्य नामनक्षत्रनामादिवर्णो वा क्रूरग्रहेण विद्धमाक्रान्त वा तत्तद्द्रव्य तत्प्रदेशे महर्घता याति। बहुयत्नेनापि दुर्लभ भवतीति। क्रूरवेधसमायोगे इति। सुगमम्। सूर्यभात् इति। स्पष्टम्। केतुरुल्काश्ने इति। स्पष्टम्। निर्घातश्च इति। पूर्वार्धं स्पष्टम्। एते उपग्रहा स्वस्थाने स्वस्वभोगसमयेषु सर्वकार्येषु सर्वदा विघ्नदा नाशका भवन्तीत्यर्थ ॥ ५५–६१ ॥

कृत्तिकादि तीन-तीन नक्षत्रों से कूर्मचक्र म कूर्म के नव अङ्गों की कल्पना करके उसमें देश विभाग किया गया है। उसम कृत्तिका आदि तीन नक्षत्रों को क्रूर ग्रह से वेध होनेसे जिन जिन देशों के वर्ण, स्वर आदि विद्ध होते हों तो व देश नष्ट हो जाते हैं। कृत्तिका का क्रूर ग्रह से वेध होता हो तो ब्राह्मण, पुष्यमे वेध होता हो तो क्षत्रिय, रेवती से वेध होता हो तो वैश्य और पुनर्वसु से वध हो तो शूद्र वधित होता है। तेल, रत्न, मीठे पदार्थ, हाथी, घोडा और अन्य चौपायों इनमें जिनके नाम के नक्षत्र या वर्ण पाप ग्रह से विद्ध हो अथवा पापाक्रान्त हो वह वह वस्तु उस प्रदेश ( कूर्मचक्रोक्त ) में दुर्लभ होती है अर्थात महगी होती है। जिसका उपग्रह सम्बन्धी क्रूरग्रह का वेध होता हो तो उसका रोग या सग्राममे मृत्यु होती है। सूर्य के नक्षत्र से पाँचव नक्षत्र को विद्युन्मुख, आठव को शूल, चौदहवें नक्षत्र को सन्निपात, अट्ठारवें नक्षत्र को केतु, इक्कीसवें नक्षत्र को उल्का, बाइसवें को कम्प, तेइसवें को वज्र, चौबीसवें को निर्घात नाम से कहते हैं। ये आठ उपग्रह हैं। ये सभी कार्यों म अपने भोग समय पर्यन्त सर्वदा विघ्न करते हैं ॥ ५५–६१ ॥

जन्मभं कर्म आधानं विनाशं सामुदायिकम्।
साङ्घातिकमिद धिष्ण्यं षट्कं सर्वजनीनकम्॥ ६२ ॥
जातिदेशाभिषेकैश्च नवधिष्ण्यानि भूपतेः।
वेधं ज्ञात्वा फलं ब्रूहि सौम्यैः क्रूरैः शुभाशुभम् ॥ ६३ ॥
जन्मभं जन्मनक्षत्रं दशम कर्मसंज्ञकम्।
एकोनविंशमाधान त्रयोविंश विनाशभम् ॥ ६४ ॥

[1] 'तैल भाण्डम्' इति पाठान्तरम्।

अष्टादशं च नक्षत्रं सामुदायिकसंज्ञकम् ।
साङ्घातिकं च विज्ञेयमृक्षं षोडशमत्र हि ॥ ६५ ॥
षट्त्रिंभं राज्यभं प्रोक्तं जातिनामस्वजातिभम् ।
देशभं देशनामर्क्षं राज्यर्क्षमभिषेकभम् ॥ ६६ ॥
मृत्युः स्याज्जन्मभे विद्धे कर्मभे क्लेश एव च ।
आधानर्क्षे प्रवासः स्याद्विनाशे बंधुविग्रहः ॥ ६७ ॥
सामुदायिकभेऽनिष्टं हानिः साङ्घातिके तथा ।
जातिभे कुलनाशश्च बन्धनं चाभिषेकभे ॥ ६८ ॥
देशर्क्षे देशभङ्गश्च क्रूरैरेवं शुभैः शुभम् ।
उपग्रहसमायोगान्मृत्युर्भवति नान्यथा ॥ ६९ ॥
भयं भङ्गश्च घातश्च मृत्युर्भङ्गः पुरःस्थितैः ।
क्रूरैरेकादिपञ्चान्तैर्युधि वेधे फलं भवेत् ॥ ७० ॥

जन्मभं कर्म इति । इत्थं धिष्ण्यषट्कं नक्षत्रषट्कं जन्मभमित्यादि नाडीसंज्ञकम् सर्वजनीनकम् सर्वजनविषयं ज्ञेयम् । ज्ञातिदेशाभिषेके इति । भूपते राज्ञो ज्ञातिदेशाभिषेकर्क्षं सह जातिनक्षत्रं पूर्वं ५६ श्लोकटीकायामुक्तमेव, देशनक्षत्रं शतपदचक्रप्रकारोक्तदिशा नामनक्षत्रम् । अभिषेकभं यस्मिन्नृक्षे राजा राज्येऽभिषिक्तस्तमभिषेकभम् । एषु शुभाशुभेषु वेधं बुद्ध्वा शुभाशुभं फलं ब्रूहि कथय । जन्मभम् इति । स्पष्टम् । अष्टादशमिति । सुगमम् । षट्त्रिंशम् इति । स्पष्टार्थं । मृत्युः स्यात् इति । स्पष्टम् । देशर्क्षे इति । अत्रैव नाडीनक्षत्रे क्रूरग्रहवेधे सति उपग्रहसमायोगे पञ्चभाद्युपग्रहस्थानमिलने सति मृत्युर्भवति नान्यथा न कुशलमित्यर्थः । भयं भङ्गश्च इति । एकादिपञ्चान्तैः क्रूरैः पुरःस्थितैः जन्मादिनक्षत्रे सम्मुखवेधकारिभिर्विद्धे सति क्रमेण भयादिफलं वदेत् ॥६५–७०॥

जन्म नक्षत्र, कर्म, आधान, विनाश, सामुदायिक, साघातिक ये ६ नक्षत्र नाडीसंज्ञक हैं और सभी के लिये होते हैं। राजाओं के पूर्वोक्त ६ नक्षत्रों के साथ जाति, देश और अभिषेक नक्षत्र के साथ नव नक्षत्र नाडीसंज्ञक होते हैं इनमें शुभग्रह और पापग्रह के वेध से शुभ और अशुभ फल क्रम से होते हैं। जन्मनक्षत्र से दशम नक्षत्र को कर्म, १९ वें नक्षत्र को आधान नक्षत्र, २३ वें नक्षत्र को विनाश, १८ वें नक्षत्र को सामुदायिक, १६ वें नक्षत्र को साघातिक, २६ वें नक्षत्र को राज्यनक्षत्र, स्वजातीय नक्षत्र को जातिनक्षत्र, देश के नक्षत्र को देशनक्षत्र और जिस नक्षत्र में राज्याभिषेक हुआ है उसे राज्यनक्षत्र कहते हैं। जन्मनक्षत्र क्रूरग्रह से विद्ध हो तो मृत्यु, कर्म

नक्षत्र के वेध से क्लेश, विनाश में बन्धु विग्रह, सामुदायिक में अनिष्ट, साघातिक में हानि, जाति नक्षत्र में कुल का नाश, अभिषेक नक्षत्र में वेध होने से बन्धन और देश नक्षत्र में वध होने से देश का नाश होता है। यदि शुभ ग्रह वेध करें तो शुभ होता है। यदि वध समय में उपग्रह का संयोग हो तो मृत्यु होती है। संग्राम में जन्मादि नाडी नक्षत्रों को एक क्रूरग्रह वध करता हो तो भय, दो ग्रह वध करते हों तो पलायन, तीन ग्रह वेध करते हों तो घात होता है, चार ग्रह वेध करते हों तो मृत्यु और पांच ग्रह वेध करते हों तो भी मृत्यु होती है ॥ ६२–७० ॥

तिथिमृक्षं स्वरं राशि वर्णं चैव तु पञ्चकम् ।
यद्दिने विध्यते चन्द्रस्तद्दिने स्याच्छुभाशुभम् ॥ ७१ ॥

तिथिमृक्षम् इति । तिथिमृक्ष स्वरमित्यादिपञ्चक यद्दिने यस्मिन् दिवसे शुभपापवेधे सति चन्द्रेण विध्यते तद्दिने शुभमशुभं च क्रमेण ज्ञेयं ॥ ७१ ॥

तिथि नक्षत्र, स्वर, राशि और वर्ण ये पांचों जिस दिन पापग्रह या शुभग्रह से विद्ध हों उस दिन यदि चन्द्रमा से विद्ध हों तो पाप और शुभफल होता है ॥ ७१ ॥

अथार्घ्यं सम्प्रवक्ष्यामि यदुक्तं ब्रह्मयामले ।
एकाशीतिपदे चक्रे ग्रहवेधाच्छुभाशुभम् ॥ ७२ ॥
देशः कालस्ततः पण्यमिति त्रीण्यर्घनिर्णये ।
चिन्तनीयानि वेध्यानि सर्वकालं विचक्षणैः ॥ ७३ ॥
देशोऽथ मण्डलं स्थानमिति देशस्त्रिधोच्यते ।
वर्षं मासो दिनं चेति त्रिधा कालोऽपि कथ्यते ॥ ७४ ॥
धातुर्मूलं च जीवश्च इति पण्यं त्रिधा मतम् ।
अथ त्रिकत्रिकस्यास्य वक्ष्यामि स्वामिखेचरान् ॥ ७५ ॥

अथार्घ्यम् इति । स्पष्टम् । देशः काल इति । सुगमम् । देशोऽथ इति । देशः कान्यकुब्जादि, मण्डलं ग्रामसमूह, स्थानं ग्रामविशेष । अनेन प्रकारेण देशस्त्रिधोच्यते । एवं कालः समयोऽपि वर्षं मासो दिनं चेति त्रिधा उच्यते । धातुमूलम् इति । धातु सुवर्णादय । मूलं वृक्षफलं तद्विकारान्तम् । जीवो मनुष्यादय इत्येवं पण्यमपि त्रिधा मतम् कथितम् । शेषं सुगमम् ॥ ७२–७५ ॥

अब मैं ब्रह्मयामल में कहे हुये अर्घ्य प्रकरण को कह रहा हूँ ८१ पद वाले चक्र में ग्रहों के वेध से शुभ अशुभ फल जानना चाहिये । देश, काल और बेचने वाली वस्तु इन तीनों के वेध को देखकर वेध फल का निर्णय करना चाहिये । पण्डितों को सभी समय में इस वेध का विचार करना चाहिये । देश ( कान्यकुब्ज आदि ),

मण्डल ( ग्राम समूह ) स्थान इस प्रकार से देश तीन प्रकार का होता है और वर्ष, मास, दिन ये तीन भेद काल के हैं। धातु ( सुवर्ण आदि ) मूल ( चन्दन आदि )। जीव मनुष्य से लेकर सभी कीट पतंग, इस प्रकार विक्रेय वस्तु के भी तीन भेद होते हैं। अब इन तीनों भेदों के स्वामियों को कह रहा हूं ॥ ७२–७५ ॥

देशेशा राहुमन्देज्या मण्डलस्वामिनः पुनः।
केतुसूर्यसिताः स्थाननाथाश्चन्द्रारचन्द्रजाः ॥ ७६ ॥
वर्षेशा राहुकेत्वार्की जीवो मासाधिपः पुनः।
भौमार्कज्ञसिता ज्ञेयाश्चन्द्रः स्याद्दिवसाधिपः ॥ ७७ ॥
धात्वीशाः सौरिपातारा जीवेशा ज्ञेन्दुसूरयः।
मूलेशाः केतुशुक्रार्का इति पण्याधिपा ग्रहाः ॥ ७८ ॥
पुंग्रहा राहुकेत्वर्कजीवभूमिसुता मताः।
स्त्रीग्रहौ शुक्रशशिनौ सौरिसौम्यौ नपुंसकौ ॥ ७९ ॥
सितेन्दू सितवर्णेशौ रक्तेशौ भौमभास्करौ।
पीतौ सौम्यगुरू कृष्णा राहुकेत्वर्कजा मताः ॥ ८० ॥
ग्रहो वक्रोदये स्वांशे उदये च बलाधिकः।
देशादीनां स एकैकः स्वामी खेटस्तदा मतः ॥ ८१ ॥

देशेशा इति। राहुमन्देज्या राहुशनिगुरवः देशेशा देशाधिपाः केतुसूर्यसिताः पुनर्मण्डलेशाः। सितः शुक्रः। चन्द्रारचन्द्रजाः चन्द्रभौमबुधाः स्थाननाथाः। वर्षेशा इति। राहुकेत्वार्किजीवाः वर्षेशाः वर्षस्वामिनः। भौमार्कज्ञसिता मासाधिपाः। ज्ञो बुधः। दिवसाधिपश्चन्द्रः। सौरिपातारा सौरिराहुकुजा धात्वीशाः। ज्ञेन्दुसूरयः बुधचन्द्रगुरवो जीवेशाः। केतुशुक्रार्का मूलेशा इत्येवं ग्रहाः पण्याधिपा ज्ञातव्याः। पुंग्रहा इति। राहुकेत्वर्कजीवभूमिसुता राहुकेतुरविगुरुकुजाः पुंग्रहाः पुरुषग्रहा मताः, शुक्रशशिनौ शुक्रचन्द्रौ स्त्रीग्रहौ शेषौ सौरिसौम्यौ शनिबुधौ नपुंसकौ ज्ञेयौ। सितेन्दू इति। सितेन्दू शुक्रचन्द्रौ सितवर्णेशौ श्वेतवर्णाधिपौ। भौमभास्करौ रक्तेशौ रक्तवर्णेशौ। सौम्यगुरू पीतवर्णेशौ। राहुकेत्वर्कजा कृष्णवर्णेशाः कथिताः। वक्रोदये इति। पूर्वोक्तदेशाधिपानां मध्ये यो ग्रहो वक्री भवति उदितो भवति यत्र कुत्रचिद्राशौ स्वांशे स्थितः उदये च सति बलाधिको ग्रहो भवति। स एव योगे सति देशाधिपमध्ये देशादीनां स्वामी भवति ॥ ७६–८१ ॥

राहु, शनि, गुरु ये देश के स्वामी हैं, केतु, सूर्य, शुक्र ये मण्डल के स्वामी हैं,

चन्द्रमा, भौम, बुध ये स्थान के स्वामी हैं। राहु, केतु, शनि गुरु ये वर्ष के स्वामी हैं। भौम, सूर्य, बुध, शुक्र, ये मास के स्वामी हैं। चन्द्रमा दिन का स्वामी है। शनि, राहु, भौम धातु के स्वामी हैं, बुध, चन्द्रमा, गुरु ये जीव के स्वामी हैं, केतु, शुक्र, सूर्य मूलरूपी पण्य के स्वामी हैं। राहु, केतु, सूर्य, गुरु, भौम ये पुरुषग्रह हैं, शुक्र, चन्द्रमा ये स्त्रीग्रह हैं, और शनि, बुध ये नपुंसक ग्रह हैं। शुक्र, चन्द्रमा सफेद वस्तु के, भौम, सूर्य रक्तवर्ण के, बुध, गुरु पीलेवर्ण के और राहु, केतु काले वर्ण के स्वामी हैं। पूर्वोक्त देशाधिपतियों में जो ग्रह वक्री हो, उदित हो, अपने नवांश में हो वही देशाधिपति होता है ॥ ७६–८१ ॥

वक्रोच्चगः स्वहर्म्येषु पूर्णवीर्यो ग्रहो भवेत्।
मेषो वृषो मृगः कन्या कर्कमीनतुलाधराः ॥ ८२ ॥
आदित्यादिग्रहोच्चाः स्युर्नीचं यत्तस्य सप्तमम्।
परमोच्चा दिशो रामा अष्टाविंशास्तिथीन्द्रियाः ॥ ८३ ॥
सप्तविंशास्तथा विंशाः सूर्यादीनां तथांशकाः।
परमोच्चात्परं नीचमर्धचक्रान्तसंख्यया ॥ ८४ ॥
उच्चान्नीचाच्च यत्तुर्यं समं स्थानं तदुच्यते।
तदग्रपृष्ठगे खेटे बलं त्रैराशिकं मतम् ॥ ८५ ॥
उच्चस्थे च बलं पूर्णं नीचांशस्थे बलं दलम्।
स्वक्षेत्रस्थे बलं पूर्णं पादोनं मित्रभे गृहे ॥ ८६ ॥
अर्धं समगृहे ज्ञेयं पादं शत्रुगृहस्थिते।
त्रैराशिकवशाज्ज्ञेयमन्तरे तु बलं बुधैः ॥ ८७ ॥
एवं देशादिनाथा ये ग्रहवेधे व्यवस्थिताः।
सुहृदः शत्रवो मध्याश्चिन्तनीयाः प्रयत्नतः ॥ ८८ ॥
स्वमित्रसमशत्रूणां वेधे, देशादिषु क्रमात्।
शुभग्रहः शुभं धत्ते चतुस्त्रिद्व्येकपादकैः ॥ ८९ ॥
स्वमित्रसमशत्रूणां वेधे, देशादिषु क्रमात्।
दुष्टं दुष्टग्रहः कुर्यादेकद्वित्रिचतुःपदैः ॥ ९० ॥

वक्रोच्चगा इति। वक्रोच्चगः वक्री तथा उच्चगः ग्रहः पूर्णवीर्यः। स्वहर्म्येषु स्वगृहेषु पूर्णवीर्यो ग्रहो भवति। आदित्यादिग्रहाणां क्रमेण मेषो वृषो मृग

कन्या कर्क मीन तुला राशय परमोच्चरश्मयस्तेषु क्रमेण दिशो, रामास्त्रय, अष्टाविंश, तिथि पञ्चदश, इन्द्रिया पञ्च, सप्तविंशति, विंशतिरंशा परमोच्चा । परमोच्चात्परम् अर्धचक्रान्तरस्थया सप्तम तावद्भिरेवांशैः नीचस्थानम् । उच्चान्नीचाच्च इति । उच्चान्नीचाच्च उच्चस्थानात्तथा नीचस्थानाच्च यत्तुर्यं चतुर्थस्थान तत् समस्थानमुच्यते । तदग्रपृष्ठगे समस्थानादग्रगे पृष्ठगे ग्रहे त्रैराशिकाद् बल ज्ञेयम् । अथ केचित्स्वराशितोऽग्रगे पृष्ठगे खेटे त्रैराशिकाद्बलमिच्छन्ति तेषा मत न शोभनम् । उच्चस्थे स्वोच्चराशौ ग्रहे सति पूर्णबल ददाति नीचस्थे स्वनीचराशौ नमरस्थिते ग्रहे सति अर्ध बलम् ददाति । स्वक्षेत्रस्थे स्वगृहे पूर्णबलम् भवति, मित्रभे मित्रराशौ पादोन बलम् भवति । अर्धम् इति । समगृहे स्थिते अर्ध बलम् । शत्रुगृहस्थिते शत्रुराशौ स्थिते पाद चतुर्थांश बल ज्ञेयम् । मध्ये त्रैराशिकाद्बल ज्ञेयम् । एव देशादिनाथा इति । एव पूर्वोक्तप्रकारेण ये देशादीना नाथा भवन्ति ते ग्रहवेधे वामसम्मुखदक्षिणदृष्ट्या देशस्य वर्णादिपञ्चके वेधयितु व्यवस्थिता । तत्र वेधे सति वेधकर्तारो देशाधिपस्य सुहृद शत्रव मध्या उदासीना वा इति प्रयत्नत चिन्तनीया । यथा मण्डलस्वामी सूर्य । स च मण्डलश्चन्द्रगुरुभौमैर्विद्धस्तथैते रवे मित्राणि तस्मिन् वक्ष्यमाणप्रकारेण शुभदा । स्वमित्रसम इति । देशादिपु देशे मण्डले पर्यायेषु च स्वमित्रसमशत्रूणा स्वस्य मित्रस्य समस्य शत्रोश्च वेधात् शुभफल दत्ते ददाति । चतुस्त्रिद्व्येकपादकैः स्ववेधे पूर्णम् । मित्रवेधे पादोन समवेधे अर्द्धम्, शत्रुवेधे पादफलमिति । तत्र चेच्छुभग्रहस्तदा शुभम् फलमन्यथा ऽशुभमेव । स्वमित्रसम इति । अत्र स्वपदेन स्वदेशाधिपा ग्रहो ज्ञेय । तत्र विद्धदेशाद्यो नामराशि स चक्रस्थवेधग्रहेण मित्रसमशत्रूणा मध्ये दुष्टग्रहवेधाद् दुष्ट देशादिक फलम् एकद्वित्रिचतुष्पदैर्दृष्टे सति क्रमेण फल भवति ॥ ८७–९० ॥

जब ग्रह बली या अपने उच्च राशि में अथवा अपने गृह में होता है तब पूर्णबली होता है । सूर्यादि ग्रहों का क्रम से मेष, वृष, मकर, कन्या, कर्क, मीन और तुला राशियां उच्च होती हैं । इनमें क्रमसे १० अंश, ३ अंश २८ अंश १५ अंश ५ अंश, २७ अंश और २० अंश तक परम उच्च होता है । जैसे मेष राशि में १० अंशतक सूर्य का परम उच्च होता है । उच्च स्थान से सातवीं राशि पर उतने ही अंशतक परमनीच होता है । जैसे सूर्य का तुला राशि में १० अंश तक परमनीच होता है । उच्च तथा नीच राशि से चौथा स्थान समस्थान होता है । इससे आगे या पीछे ग्रह होतो त्रैराशिक द्वारा बल का लाना चाहिये । अपने उच्चराशि में ग्रह हो तो पूर्णबल देता है, नीच राशि में आधा बल देता है, एव अपने गृह में ग्रह होतो पूर्णबल देता है । मित्र के गृह में ग्रह होतो चतुर्थांश कम बल देता है । समके गृह में आधाबल, शत्रुराशि में चतुर्थांश बल को देता है । इसके मध्य में

त्रैराशिक से जल लाना चाहिये। वेधचक्र में ग्रहों का वाम, सम्मुख, दक्षिण दृष्टि द्वारा जिस देश के वर्णादि पाचों का वध होता हो तो यह देखना चाहिये कि वेधकर्ता ग्रह देशाधिप का मित्र, सम, शत्रु म म क्या है उसी के अनुसार उस देश म वस्तु आदि का शुभ अशुभ फल कहना चाहिये। देश, मडल, ग्राम म अपने मित्र, सम, शत्रु के वेध हो तो क्रम मे पूर्ण, चतुर्थांशोन, आधा और चतुर्थांशफल होता है। यदि वेधकर्ता शुभग्रह हो तो शुभ फल अथवा पापफल होता है। विद्धदेशादि की जो नाम राशि हो वह यदि दुष्टग्रहों से वधित हो तो दुष्टफल होता है, एक, दो आदि ग्रहों से नष्ट होतो उसके अनुसार फल होता है। देशाधिपति का वेधकर्ता ग्रह स्वमित्रादि चरण फलदाता होकर देखता होतो जितना फल वह देने में समर्थ है उतना फल अवश्य होता है ॥ ८२-९० ॥

विद्धं पूर्णदृशा पश्यंस्तत्पादेन फलं ग्रहः।
विदधात्यन्यथा ज्ञेयं फलं दृष्ट्यानुमानतः ॥ ९१ ॥
वर्णादिस्वरराशीनां मेषाद्ये राशिमण्डले।
ग्रहदृष्टिवशात्सोपि वेधो वर्णादिके मतः ॥ ९२ ॥
स्वरवर्णाः स्वचक्रोक्तास्तिथिवेधे च पीडिताः।
तिथौ वर्णे च राशौ च स्वदृष्ट्या,दृष्टिजं फलम् ॥ ९३ ॥
अशुभो वा शुभो वापि शुक्ले विध्येत्तिथिं ग्रहः।
सर्वं निजफलं दत्ते कृष्णपक्षे तु तद्दलम् ॥ ९४ ॥
खेटस्य स्वांशके ज्ञेया पूर्णा दृष्टिः सदा बुधैः।
दृष्टिहीने पुनर्वेधे न स्यात्किञ्चिच्छुभाशुभम् ॥ ९५ ॥
इत्येवं दृष्टिभेदेन निर्दिष्टं सकलं फलम्।
वर्णादिपञ्चके विद्धग्रहो दत्ते शुभाशुभम् ॥ ९६ ॥

विद्धमिति। अत्र लक्ष्मीधरस्त्वेवं व्याख्यातवान्—यो देशाधिपतिर्वेधकर्ता स्वमित्रादिचरणफलप्रकारी सपदि पूर्णदृशा पश्यति तदा यथार्थत्वेन फलदायी भवति, मित्रगृहगत्रिपादफलदायी त्रिभिः पादैश्च पश्यति तदाभिरवभावत-फल भवति त्रिपादेनेव फल परिपच्यते। समगृहस्थो यदि पश्यति तदा द्विपाददृशा च पश्यति तदा स्वभावतो द्विपादेन फल भवति, शत्रुगृहगो यदि विध्यति तदा पादफलम्। एकपादेन पश्यति तदा यथार्थफल ददाति। नरहरिस्तु-वेध्यनामराशिं पूर्णदृष्ट्या पश्यन् तद्राश्यश यदा विद्धं करोति तदा पादेन फल विदधाति। एवं दृष्ट्यनुमानतो अन्यथा विपरीतक्रमेण फल ज्ञेयम्।

तथा च पूर्णदृष्टो यत्केपादेन फल तत्पूर्णं भवति। वर्णादीति। मेषादि राशिमडले द्वादशराशौ वर्णआदिभूतो एषा स्वराणाम् अ-इ-उ-ए-ओ इत्येतेषां वर्णभद्रदनतो व० नि० बु० वे० वो एषा क्रमेण नवाशस्व्यवस्थित राशीना ग्रहदृष्टिवशेन वेध फलदायक। सोऽपि वेधो वर्णादिके मत। सर्वाशचक्रे नवांशनेयमत्र तन्नवांशवर्णयोरपि वेधस्तत्रापि फल वेधनवांशक राशौ ग्रहस्य दृष्टिवशेन मेषादिद्वादशराशिचक्रे इति। स्वरवर्णा इति। स्वरा वर्णाश्च ये स्वरचक्रे उक्तास्ते तिथिवेधे पीडिता भवन्ति। तिथिवर्णेषु यो राशिस्तद्दृष्टे तद्राशिस्थे तद्दर्शिन भवति। यथा द्वादशीतिथेर्मकारो वर्ण द्वादशीतिथिवेधेन मकारो पीडितो भवति। मकारस्य स्वर इकार। वर्णादिपञ्चक नाम्ना आद्यवर्णान्निरूप्यते। तिथिपीड्या वर्णस्वरा पीडिता भवन्ति। वेध कारिभिर्ग्रहैर्द्वादशारचक्रे सिंहराशौ दृष्टे सिद्धवर्णादिपञ्चक स्पृष्ट भवति। वर्णस्य राध स्थाने राशयस्तस्मिन्नेकतमे दृष्टे वर्णादिपञ्चक स्पृष्ट न भवति। अशुभ इति। अशुभ पापग्रह। शुभ सौम्यग्रह। शुक्ले शुक्लपक्षे तिथि विध्यन् तिथिवेधन शुभेन स्वं निजफल दृष्टिनिरूपित दत्ते ददाति। कृष्णपक्षे शुभाशुभयोरर्द्धं फल ददाति। खेटकस्याशके इति। खेटकस्य ग्रहस्य अशके दृष्टि पूर्णा बुधै पण्डितै सदा ज्ञेया। दृष्टिहीनवेधे पुन किंचिदपि शुभाशुभ न स्यात्। इत्येवम् इति। अनेन क्रमेण दृष्टिभेदेन सकल फल निर्दिष्ट कथितम्। एव वर्णादिपञ्चके स्वरनक्षत्रराशितिथ्यात्मके विद्धे सति ग्रहो वेधक शुभाशुभ च फल दत्ते॥ ९१-९६॥

देशादि की जो नाम राशि उसे वेध करने वाले ग्रह को यदि राश्याधिपति देखता हो और वह उसका मित्रादि ग्रह हो तो उसके अनुसार ही अर्थात् दृष्टिफल के अनुसार ही फल को देता है। मेषादि राशिचक्र में देशादिकों के नाम के आदि अक्षर में जो वर्णादि स्वरपञ्चक उसमें वेध होने से ग्रहदृष्टि के अनुसार ही फल कहना चाहिये। चक्र में कहे हुए स्वर, वर्ण आदि तिथि के वेध से पीडित होते हैं। तिथि, वर्ण और राशि में दृष्टि के अनुसार ही फल होता है। शुक्लपक्ष में तिथि को वेध करने वाला ग्रह पापग्रह हो या शुभग्रह वह संपूर्ण फल को देता है और कृष्ण पक्ष में आधा फल देता है। यदि ग्रह अपने राशि और अपने अंश में हो तो उसकी पूर्णदृष्टि होती है। दृष्टिहीन वेध का कोई फल नहीं होता है। इस प्रकार वर्णादि पाँच का वेध होने से दृष्टि के अनुसार ग्रह अपने संपूर्णफल को देता है, यह संपूर्णफल दृष्टिभेद से ही होता है॥ ९१-९६॥

सौम्य· पूर्णदृशा पश्यन्विध्यन्वर्णादिपञ्चकम्।
फल विशोपकाः पञ्च क्रूरस्तु चतुरो दिशेत्॥ ९७॥

वेधो वर्णादिके यावत् स्थानवेधे च यावती ।
दृष्टिस्तदनुमानेन ग्राह्या विशोपका बुधैः ॥ ९८ ॥
एवं विशोपका यत्र सम्भवन्ति शुभाशुभाः ।
अन्योन्य शोधयेत्तेषां शेषं ज्ञेयं शुभाशुभम् ॥ ९९ ॥
वर्तमानार्घविंशाशकल्पनास्तेषु च क्रमात् ।
वर्तमानार्घके देया पात्या चैव शुभाशुभे ॥ १०० ॥

सौम्या इति । सौम्या बुधगुरुशुक्रपूर्णचन्द्राः । पापाः रविकुजशनिराहवः । एषां शुभदृष्टौ विंशोपकान् फलं कल्पयेत् । तत्र चतुर्णां शुभानां पूर्णादिदृष्टिभिः प्रतिपादं पञ्चविंशोपकलक्षणं फलं शुभग्रहो ददाति । एवं क्रूरः प्रतिपादं चतस्रः विंशोपकफलं ददाति । कृत्तिकादिकनागान्त भानां राशिर्वृषादिकः । मघादि सप्तभानां तु सिंहाद्या राशयः स्मृताः ॥१॥ मैत्रादि सप्तभानां तु वृश्चिकाद्यास्त्रयः स्मृताः । धनिष्ठादि सप्तभानां तु कुम्भाद्याश्च त्रयः स्मृताः ॥२॥ वृषादित्रितये अवकहडा वर्णाः । सिंहादित्रितये मटपरताः । वृश्चिकादित्रये नयभजखाः । कुम्भादित्रये गसदचलाः वर्णाः । एवं नक्षत्रादिवर्णाश्च राशीनां ज्ञेयाः । वेधो वर्णादिके इति । वर्णादिपञ्चके वेधे सति यावत्स्थानवेधे च यावती दृष्टिः यथा स्वगृहस्था पूर्णदृशा, मित्रगृहस्थास्त्रिपाददृशा समगृहस्था द्विपाददृशा एवं शत्रुगृहस्थाश्चरणेन तदनुमानेन बुधैः विंशोपका ग्राह्या इति । एवं विशोपका इति । एवं यत्र दृष्ट्यादिबलभेदेन शुभा अशुभा वा विंशोपकाः सम्भवन्ति तत्रान्योन्यं शोधयेत् । अत्रेदमवधेयम् । शुभग्रहविंशोपका एकत्र धार्याः । अशुभग्रहविंशोपका अन्यत्र धार्याः । तेषां मध्ये परस्परं ये यस्मान्न्यूनास्तेऽधिके परिशोधनीयाः शेषं यदवशिष्टं ततः शुभमशुभं फलं वाच्यम् । अत्र विंशोपका वेधदृष्टिवशेन ज्ञेयाः । यथा पूर्णदृष्टिवेधे सति शुभस्य चत्वारिंशत् विंशोपका भवन्ति । पादहृष्टया वेधे च तृतीयांशमे विंशत् मतान्तरेण पञ्च विंशोपकाः । द्विपाददृष्ट्या वेधे नवमे पञ्चमे वा विंशद्वांश । चतुर्थेऽष्टमे वा दश वा पञ्चदश । सप्तमे चत्वारिंशद्वा विंशति । वर्तमानार्घ विंशाश इति । एवं वर्तमानार्घं वर्तमानधान्यादिद्रव्यमूल्ये तत्तन्नामनक्षत्रस्वरवर्णस्तु तिथिराशिवेधेन पूर्वोक्तप्रकारेण विंशाशकल्पना ग्राह्या अन्योन्यपरिशोधनपर्यन्ता कार्या । ततोऽवशिष्टांशेन वर्तमानार्घे शुभमशुभं वा देया ॥

यदि शुभग्रह पूर्ण दृष्टि से वर्ण आदि पाँचों को वेध करते हों तो विंशोपक फल ५ और क्रूरग्रह वेध करता हो तो ४ विंशोपक फल होता है। वर्ण आदि के स्थान वेध में जितनी दृष्टि हो उसी के अनुमान से विंशोपक लेना चाहिये। इस प्रकार से शुभ और पापग्रहों के विंशोपक अलग २ रखकर दोनों के अन्तर से शुभ और

अशुभ फल कहना चाहिये । इस प्रकार वस्तमान धान्य आदि के नामों में भी उन धान्यों के नाम से विशेषक लाकर उनका भी शुभ-अशुभ फल कहना चाहिये ॥

देशध्वंसः प्रजापीडा नृपतिप्रवधस्तथा ।
यत्र दृष्टिश्च तत्र स्याद्दुर्भिक्षं मण्डले स्फुटम् ॥ १०१ ॥
अकालेपि फल पुष्पं वृक्षाणां यत्र जायते ।
स्वजातिमासभुक्तिश्च दुर्भिक्ष तत्र रौरवम् ॥ १०२ ॥
परचक्रागमस्तत्र विग्रहश्च स्वराजके ।
ऋतोर्विपर्ययो यत्र दुर्भिक्षं मण्डले भवेत् ॥ १०३ ॥
भूमिकम्पो रजःपातो रक्तवृष्टिश्च जायते ।
देशो सर्वसुखोपेते वेधादेवं वदेद्बुध' ॥ १०४ ॥
वृक्षाणां जायते वृद्धिः स्वकाले फलपुष्पयोः ।
सुभिक्ष क्षेममारोग्यं च प्रजानां तत्र जायते ॥ १०५ ॥
स्वचक्रं परचक्रं च न कदाचित्प्रजायते ।
बान्धवा सुहृदस्तत्र शुभानां वेधसम्भवे ॥ १०६ ॥
दीपो यथा गृहस्यान्तरुद्योतयति सर्वतः ।
तथेदं सर्वतोभद्रं चक्र ज्ञानप्रकाशकम् ॥ १०७ ॥
विना बलिं विना होमं कुमारीपूजनं विना ।
शुभग्रहं विना देवि चक्रराजं न वीक्षयेत् ॥ १०८ ॥
अविचार्यतया पृच्छेत्पृच्छकः कथकस्तथा ।
द्वाविमौ विग्रहौ प्रोक्तावत्र देवि न संशयः ॥ १०९ ॥
जातकं च तिथि राशि विज्ञेयं नामतोज्ज्वलौ ।
अज्ञातजातकाना तु समस्तमभिधानत' ॥ ११० ॥
विस्तारेण मयाख्यातं यथोक्त ब्रह्मयामले ।
न देय यस्य कस्यापि चक्रमेतत्सुनिश्चितम् ॥ १११ ॥

इति ब्रह्मयामले नरपतिजयचर्यायां स्वरोदये
सर्वतोभद्रचक्र समाप्तम् ।

ऋक्षे पूर्वानुधफढ स्तम्भे नैर्ऋत्यगोचरे ।
दुथझजास्तथा वायौ स्तम्भ उत्तरभाद्रके ॥ ६ ।
आर्द्रा हस्तस्तथाषाढपूर्वोत्तरपदाभिधे ।
एवं स्तम्भचतुष्कं च ज्ञातव्यं स्वरवेदिभिः ॥ ७ ॥

चक्र शतपदम् इति । शतपद चक्र शतकोष्ठक चक्र वक्ष्ये । कथंभूत भपादाक्षरसंभवम् भ नक्षत्र तस्य प्रत्येक चतुरक्षरास्तत्संभव तदुद्भूतम् । यथा तत्र नामादिवर्णतो नक्षत्रराश्यंशका ज्ञेया । तिर्यगूर्ध्वगता इति । रुद्र संख्या एकादश संख्या रेखा तिर्यगूर्ध्वगता तिर्यग्गता ऊर्ध्वगताश्च बुध सल्लिखेत् । एवं कृते कोष्ठकानाम् एकशतमित्त जायते । न्यसेदवकहडानीति इति । क्रमादनुक्रमेण रुद्रादिदिशि अवकहडादीन्शुद्धवर्णान्पञ्च पञ्च क्रमेण नियोजयेत् । अयमर्थः—ईशानकोष्ठकादारभ्य पूर्वं पूर्वपङ्क्तौ पञ्चसु कोष्ठेषु अव कहड इति वर्णपञ्चक लिखेत् । एवमाग्नेयकोणकोष्ठाद्दक्षिणपङ्क्तौ मटपरतेति पञ्चवर्णान् । नैर्ऋत्यकोणकोष्ठकात्पश्चिमपङ्क्तौ नयभजखेति पञ्चवर्णान् । वायव्यकोणकोष्ठकादुत्तरपङ्क्तौ गसदचलेति पञ्चवर्णान्लिखेत् । पञ्चस्वरसमायोगात् इति । एकैक वर्णं पञ्चस्वरसमायोगात् अ-इ-उ-ए-ओ-एतद्रूपात् समायोगात् तत्सम्बन्धात् पञ्चप्रकारक कुरु । यथा व-वि-वु-वे-वो । क-कि-कु-के-को, ह-हि-हु-हे-हो,ड,डि,डु,डे-डो,म,मि-मु मे-मो एवमग्रेऽपि बोध्यम् । एव कुपुभुदुस्थाने त्रयो वर्णा लेख्या । यथा कुवर्णस्य कोष्ठे घङछा त्रयो वर्णा देया । पुवर्णस्य स्थाने षणठा भूवर्णस्य स्थाने धफढा दुवर्णस्य कोष्ठे थझञा एव कृते शतपदचक्रस्य वर्णा जायन्ते । कुघङछेति । ईशानगोचरे ईशानदिग्वस्थिते स्तम्भे आर्द्रानक्षत्रस्य कुघङछा वर्णा भवति । एव आग्नेयदिग्वस्थिते स्तम्भे हस्तनक्षत्रस्य पूषणठा वर्णा भवति । नैर्ऋत्यदिग्वस्थिते स्तम्भे पूर्वाषाढा नक्षत्रस्य भूधफढा वर्णा भवन्ति । वायव्यकोण स्तम्भे दुथझञा उत्तराभाद्रपदस्य वर्णा भवन्ति । एव प्रत्येकवर्णचतुष्टयमार्द्रादिनक्षत्रव्यवस्थया । स्वरवेदिभिः स्तम्भचतुष्क चक्र च ज्ञातव्यम् ॥४-७॥

नक्षत्र के चरणों के अक्षर से उत्पन्न शतपद नाम के चक्र को कहता हूँ । नाम के आदि वर्ण से नक्षत्र-राशि और अंश को जानना चाहिये । ग्यारह तिरछी और ग्यारह ऊर्ध्वाधर रेखा लिखने से १०० कोष्ठ का चक्र होता है ईशान कोण से क्रमशः अवकहड, मटपरत, नयभजख, गसदचल इन पांच २ वर्णों को लिखना चाहिए । फिर इन्हीं वर्णों में अइउएओ इन पांच स्वरों के संयोग से एक २ के पांच भेद करना चाहिये । जैसे अइउएओ । व,वि,वु,वे,वो इत्यादि । अहां निम्न कोष्ठ में कुपुभुदु वर्ण आये हैं उनमें तीन २ अक्षर और रखना चाहिये । इस प्रकार अक्षरों के रखने से चक्र में चार स्तम्भ हो जाते हैं । जैसे कुघङछ आर्द्रानक्षत्र ईशान्य में । पूषणठ

हस्त नक्षत्र अग्निकोण में, मूधपद पूर्वाषाढ नक्षत्र नैर्ऋत्य कोण में और बुधस्तम उत्तराभाद्रपद नक्षत्र वायुकोण में स्तम्भ स्वरूप होता है ॥ ५–७ ॥

धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः ।
साभिजित्यशकास्तस्य शतैकं द्वादशाधिकम् ॥ ८ ॥
यद्दक्षाशककोष्ठस्थः क्रूरः सौम्योपि वा ग्रहः ।
ततस्तद्वेधयेत्तिर्यक् पुंसो नामाद्यमक्षरम् ॥ ९ ॥
सौम्यवेधे शुभं ज्ञेयमशुभं पापखेचरैः ।
मिश्रैर्मिश्रफलं तत्र निर्वेधेन शुभाशुभम् ॥ १० ॥
यदुक्तं सर्वतोभद्रे ग्रहोपग्रहवेधतः ।
शुभाशुभफलं सर्वं तदिहापि विचिन्तयेत् ॥ ११ ॥

इति यामलीये नरपतिजयचर्यायां स्वरोदये
शतपदचक्रं समाप्तम्

धिष्ण्यानि इति । अत्र चतुरक्षरैश्चतुर्भिश्चतुर्भिरक्षरैः साभिजिति अभिजित्सहितानि कृत्तिकादीन्यष्टाविंशति नक्षत्राणि भवन्ति । तत्र प्रतिनक्षत्रं चत्वारश्चत्वारोऽंशका । अत्र द्वादशाधिकशतैकमंशका भवन्ति । यथा अइउए कृत्तिका ओवावीवु रोहिणीत्यादि भरण्यन्तमष्टाविंशति नक्षत्राणीति। यद्दक्षांशककोष्ठस्थ इति । क्रूरः सौम्यो वा ग्रह यद्दक्षांशककोष्ठस्थ यस्मिन्नृक्षांशककोष्ठे स्थितस्तस्मात्पुनस्तिर्यक् क्रमेण पुंस पुरुषस्य नामाद्यमक्षरं वेधयेत् । पुंसो नामाद्यमक्षरं तिर्यग्वेधयेत् । अत्र मनुष्यादिसर्वसस्यदेशादीनामाद्यमक्षरं वेधयेत् । सौम्ये वेधे इति । स्पष्टम् । यदुक्तमिति । सुगमम् ॥ ८–११ ॥

इस प्रकार कृत्तिकादि अभिजित् के सहित चार २ अक्षरों से युक्त भरणी पर्यन्त २८ नक्षत्र ११२ अंशों के साथ होते हैं । जिस नक्षत्र के जिस अंश के कोष्ठ में पापग्रह या शुभग्रह हो वहाँ से पुरुष के या देशादि के नाम के आदि अक्षर में उत्पन्न नक्षत्र के अंश और नक्षत्र को तिर्यक् वेध करता है । शुभग्रह के वेध से शुभ और पापग्रह के वेध से अशुभ फल और मिश्र शुभपाप दोनों के वेध से शुभ अशुभ दोनों फल होते हैं, वेध न होने से शुभ या अशुभ कुछ भी नहीं होता है । सर्वतोभद्र चक्र में ग्रह तथा उपग्रह के वेध से जो शुभ अशुभ कहे हैं वे सभी यहाँ भी विचार करना चाहिये ॥ ८–११ ॥

इति शतपदचक्र समाप्तम्

## अथ अंशचक्रप्रकरणम्

अष्टाविंशोर्ध्वगा रेखा अष्टाविंशतितिर्यगाः ।
अंशचक्रं भवत्येवं यदुक्तमादियामले ॥ १ ॥
कृत्तिकादीनि भान्यत्र पादाक्षरक्रमेण च ।
साभिजित्विन्यसेत्सर्वाण्यष्टाविंशतिसंख्यया ॥ २ ॥
यो ग्रहो यत्र ऋक्षांशे तं तत्रैव न्यसेद्बुधः ।
वेधयेत्सम्मुखं वर्णं क्रूरो वाथ शुभोपि वा ॥ ३ ॥
आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम् ।
द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकम् ॥ ४ ॥
यस्य नामाक्षरं विद्धमंशचक्रे ग्रहेण तु ।
क्रूरैरिष्टं शुभैर्हानिर्द्वयोर्वेधैर्मृत्युर्न संशयः ॥ ५ ॥

अष्टाविंशोर्ध्वगा रेखा इति । अष्टाविंशति रेखा ऊर्ध्वगतास्तिर्यग्गताश्च लेख्याः । एवमादियामलोक्तम् अंशचक्रं भवति । कृत्तिकादीनि । अत्र चक्रे ईशानकोणरेखामारभ्य अभिजित्सहितानि कृत्तिकादीनि भान्यष्टाविंशति संख्याकानि भानि नक्षत्राणि पादाक्षर अइउए इत्यादीनि क्रमेण सन्निवेशयेत् । यो ग्रह इति । यो ग्रहः क्रूरः शुभो वा यत्र ऋक्षांशे यस्मिन्नक्षत्रचतुर्भागे स्थितस्तं ग्रहं तत्रैव नक्षत्रांशे बुधः पण्डितो न्यसेत् । तत्सम्मुखं तद्रेखागम्यं वर्णं वेधयेत् । आद्यांशेन इति । आद्यांशेन ग्रहेण ग्रहाधिष्ठितेन सम्मुखस्थनक्षत्रस्य चतुर्थांशं विध्यति । एवं चतुर्थांशेनादिमं प्रथमं । द्वितीयेन तृतीयम् । तृतीयेन द्वितीयकम् । यस्य नामाक्षरम् इति । अंशचक्रे ग्रहेण शुभेन पापेन वा यस्य नामाक्षरं विद्धं तत्र क्रूरवेधे अरिष्टं भवति, शुभैर्वेधे हानिः द्वाभ्यां पापैर्वेधे मृत्युः भवति अत्र संशयो न ॥ १-५ ॥

२८ रेखा तिरछी और २८ रेखा सीधी खींचने से अंश चक्र होता है। इस चक्र में ईशान कोण के रेखा में कृत्तिका से आरम्भ कर अभिजित् सहित २८ नक्षत्रों के चरणों के अक्षरों को रखना चाहिये जैसा कि चक्र में स्पष्ट है। जो ग्रह नक्षत्र के जिस चरण पर है उस ग्रह को उसी नक्षत्र के चरण पर रखना चाहिए। इस प्रकार रखने में जिस चरण पर ग्रह है वह अपने सामने वाले नक्षत्र चरण का वेध करता है। यदि ग्रह किसी नक्षत्र के पहले चरण पर है वह अपने सामने वाले नक्षत्र के

चौथे चरण को वेध करता है—एवं चौथे चरण पर हो तो पहले चरण को वेध करता है। यदि दूसरे चरण पर हो तो तीसरे चरण को और तीसरे पर हो तो दूसरे चरण को वेध करता है। यदि अंश चक्र में नाम के आदि अक्षर को वेध करता हो तो अरिष्ट होता है, शुभग्रह वेध करता हो तो हानि और दो तीन पापग्रह वेध करते हों तो मृत्यु होता है इसमें संशय नहीं है ॥ १–५ ॥

क्रूरोभयस्थिते वेधे मृत्युर्विघ्नं शुभाशुभैः।
शुभोभयगते वेधे व्याधिः पीडा भयबन्धनम् ॥ ६ ॥
वैधव्यं च विवाहे च यात्रायां न निवर्तते।
रोगे मृत्यू रणे भङ्गः क्रूरवेधे न संशयः ॥ ७ ॥
अद्रयः सागरा नद्यो देवग्रामपुराणि च।
क्रूरवेधे विनश्यन्ति नात्र कार्या विचारणा ॥ ८ ॥

चन्द्रऋक्षांशके वेधो भवेद्यद्यपरग्रहैः।
तन्मानं तद्दिने वर्ज्यं सर्वदा शुभकर्मणि ॥ ९ ॥

इति नरपतिजयचर्यायां स्वरोदये अंशस्वरचक्रम् ।

क्रूरो भयेति। वेधे क्रूरोभयस्थितेे उभयत्र क्रूरवेधे मृत्यु शुभे उभयतो वेधे विघ्न भवति। शुभाभ्याम् उभयतो वेधे व्याधि, पीडा, बन्धनम् च भवति। वैधव्यम् इति। स्पष्टम्। अद्रय इति। सुगमम्। चन्द्रऋक्षांशके इति। कार्यकाले चन्द्रो नक्षत्राधिष्ठितचरणस्य अंश भागम् एव वेधयति तस्मिन्नरो यद्यपरग्रहस्य भौमादिकस्य वेधो भवति तदा तद्दिने तत्रअत्र शुभकर्मणि सर्वदा वर्जयेत् ॥ ६-६ ॥

यदि एक रेखास्थित दोनों के चरणों को क्रूर ग्रह से वेध होता हो तो मृत्यु होती है, शुभ पाप दोनों वेध करते हों तो विघ्न, यदि दोनों को शुभग्रह ही वध करते हों तो व्याधि, पीडा और बन्धन होता है। केवल क्रूरग्रह का ही वध होता हो तो उस नक्षत्र में यात्रा करने से यात्रा मे नहीं लौटना, रोग होवे तो मृत्यु होती है, युद्ध करने से पराजय, विवाह करने मे वैधव्य होता है। पहाड, सागर, नदी, जंगल, ग्राम और पुर के नाम नक्षत्र को क्रूरग्रह वध करता हो तो इन सबका नाश होता है इसमे संशय नहीं है। कार्य के समय चन्द्रमा जिस नक्षत्र पर रहता है उसके किसी भी चरण पर रहता है और जिस भाग को वध करता है यदि उस भाग को और भी भौमादिग्रह वेध करते हों तो उस नक्षत्रांश और नक्षत्र को शुभ कार्य में उस दिन त्याग देना चाहिये ॥ ६-९ ॥

इति स्वरोदये अंशस्वरचक्रम् ।



# अथ चामरचक्राणि

आदौ चक्रं समालिख्य छत्रत्रयसुशोभनम् ।
अश्विन्यादि न्यसेत्तत्र सप्तविंशतिभानि च ॥ १ ॥
अश्विन्याद्यं मघाद्य च मूलाद्यं च क्रमेण च ।
उत्तरे पूर्वदक्षे च एतच्छत्रत्रयं मतम् ॥ २ ॥
प्रतीचीमध्यरेखाग्रादीशानान्तं हयाधिपः ।
आग्नेयान्त नराधीशस्तन्मध्ये च गजाधिपः ॥ ३ ॥
अन्येषां भूभृतामृक्षं यत्र चछत्रे व्यवस्थितम् ।
तच्छत्रं तस्य भूपस्य शुभाशुभफलप्रदम् ॥ ४ ॥
चामरं कलशं वीणा छत्रं दण्डं पतद्ग्रहः ।
आसनं कीलकं रज्जुर्नव भेदाः प्रकीर्तिताः ॥ ५ ॥

आदौ चक्रम् इति । स्पष्टम् । अश्विन्याद्यम् इति । अश्विनीत आश्लेषान्त नवनक्षत्रात्मक चक्रमुत्तरस्या दिशि स्थाप्यम । मघाद्य मघात ज्येष्ठान्त नवनक्षत्रात्मक चक्र पूर्वदिशि स्थाप्यम् । एव मूलाद्य मूलमारभ्य रेवत्यत यावत् चक्र दक्षे दक्षिणस्या दिशि स्थाप्यम् एव कृते छत्रत्रय भवेत् । प्रतीची मध्यरेखामात् कूर्मचक्रे चपूर्वापरदिग्विभागात् ईशानान्त यावद्ये देशा व्यवस्थितास्तेषामधिपा हयाधिपा कल्प्या । आग्नेयान्त नराधीशास्तथामित पश्चिमान्त यावत् गजाधिपा कल्प्या । अन्येषाम् इति । अन्येषा भूभृता अवशिष्टराज्ञाम् ऋक्ष नक्षत्र छत्रचक्रे यत्र व्यवस्थितम् तच्छत्र तस्य भूपस्य शुभाशुभफलप्रदम् भवति । चामरम् इति । सुस्पष्टम ॥ १–५ ॥

पहले तीन छत्र चक्र बनाकर उसमें अश्विनी से रेवती पर्यन्त नक्षत्रों को लिखे । अश्विनी से ९ नक्षत्र प्रथमचक्र म लिख कर उसे उत्तर म कल्पना करे, मघा से ९ नक्षत्र दूसरे चक्र में लिख कर पूर्वभाग म कल्पना करे और मूल से ९ नक्षत्र तीसरे चक्र में स्थापित कर दक्षिण दिशा में कल्पना करे । जिस प्रकार आगे कहे हुये कूर्मचक्र मे पूर्वापर आदि रेखाओं म दिशाक्विभाग से देशों का स्थापन किया है उसी प्रकार से पश्चिम से आरभ कर इशान कोणस्थ देशों क स्वामी का नाम हयाधिपति, इशान से अग्निकोणस्थ देशों के स्वामी नराधिपति और अग्निकोण से पश्चिमस्थ देशों के स्वामी गजाधिपति कल्पना करें । अन्य राजाओं क नाम नक्षत्र जहां चक्र में हों उस चक्र मे उनके शुभ अशुभ फलों को विचारें । प्रत्येक चक्रों म नक्षत्रों के नव चामर आदि विभाग हैं जो चक्र से स्पष्ट है ॥ १–५ ॥

छत्रत्रये स्थितः सौरिर्भंग तस्य विनिर्दिशेत् ।
फलं च चामरादीनां प्रत्येकं च वदाम्यहम् ॥ ६ ॥
चामरे चण्डता वायोरनावृष्टिश्च जायते ।
दुर्भिक्ष च भवेद्घोरं प्रजापीडा न संशयः ॥ ७ ॥

| अश्वपति (उत्तर) | | | नरपति (पूर्व) | | | गजपति (दक्षिण) | | |
|---|---|---|---|---|---|---|---|---|
| १ | अ | चामर | १ | म | चामर | १ | मू | चामर |
| २ | भ | कलश | २ | पू | कलश | २ | पू | कलश |
| ३ | कृ | वीणा | ३ | उ | वीणा | ३ | उ | वीणा |
| ४ | रो | छत्र | ४ | ह | छत्र | ४ | श्र | छत्र |
| ५ | मृ | दण्ड | ५ | चि | दण्ड | ५ | ध | दण्ड |
| ६ | आ | पतद्ग्रह | ६ | स्वा | पतद्ग्रह | ६ | श | पतद्ग्रह |
| ७ | पु | आसन | ७ | वि | आसन | ७ | पू | आसन |
| ८ | पु | कीलक | ८ | अ | कीलक | ८ | उ | कीलक |
| ९ | श्ले | रज्जु | ९ | ज्ये | रज्जु | ९ | रे | रज्जु |

कलशस्थे भवेद्युद्धं रणे रोगे महद्भयम् ।
घातपातादिकं सर्वं जायते नात्र संशयः ॥ ८ ॥
वीणास्थेनार्कपुत्रेण पट्टराज्ञी विनश्यति ।
चलचित्तो भवेद्राजा भयभीता च मेदिनी ॥ ९ ॥
यदा ऋक्षत्रये सौरिश्छत्रे दण्डे पतद्ग्रहे ।
तदा तस्य भवेद्भङ्गश्छत्रस्यापि न संशयः ॥ १० ॥
आसनस्य भवेन्नाश आसनस्थे शनैश्चरे ।
युवराजक्षयः कीले बन्धनं रज्जुसंस्थिते ॥ ११ ॥

छत्रत्रये इति । छत्रत्रये छत्रे दण्डे पतद्ग्रहे भे यदा सौरिः शनैश्चरः भ्रमति तदा तस्य राज्ञः छत्रभंगं विनिर्दिशेत् । अन्यत् स्पष्टम् । चामरे इति । सुगमम् ।

कलशास्थे इति । सुगमम् । वीणास्थेनार्कपुत्रेण इति । स्पष्टम् । यदा इति । स्पष्टम् । आमनस्थे इति । स्पष्टम् ॥ ६–११ ॥

यदि शनि छत्र, दड और पतद्ग्रह के नक्षत्रों म हो तो उम राजा का छत्रभग होता है । चामर म हो तो राज्य में वायु की प्रचडता, अनावृष्टि, घोर दुर्भिक्ष और प्रजा को पीडा होती है । कलश में शनि हो तो शत्रु से युद्ध, रण में पराजय, अधिकभय और घात और पतन होता है । यदि वीणा में शनि हो तो प्रधानरानी की मृत्यु होती है, राजा चचल हो जाता है और पृथ्वी भयभीत होती है । यदि छत्र, दड पतद्ग्रह म शनि हो तो उस राजा का छत्रभग और नाश होता है । आसन मे शनि हो तो सिंहासन की हानि, कीलक मे होतो प्रजा और राज्य का नाश तथा रज्जु म होतो बधन होता है ॥ ६–११ ॥

सौम्ययुक्तोतिचारस्थः शनिरुक्तफलो नहि ।
वक्रगः क्रूरसंयुक्तः शनिरुक्तफलप्रदः ॥ १२ ॥
शनिराहुकुजादित्या यदा जीवेंदुसंयुताः ।
उत्तराधीशराज्ञा च निश्चितं छत्रभङ्गदाः ॥ १३ ॥
क्रूरग्रहचतुष्कं च बुधचन्द्रेण संयुतम् ।
पूर्वच्छत्रविनाशाय कथितं पूर्वसूरिभिः ॥ १४ ॥
एवं पापचतुष्कं च यदा शुक्रेन्दुसयुतम् ।
दक्षिणाधिपतेश्छत्रविनाशो भाषितो बुधैः ॥ १५ ॥
एवमन्येषु राज्येषु यत्र यस्य च सम्भवः ।
उक्तग्रहसमायोगाच्छत्रभङ्गं विनिर्दिशेत् ॥ १६ ॥

सौम्ययुक्त इति । सौम्ययुक्तो शुभग्रहयुक्तो यदि शनि अतिचारस्थ स्वराशिभोगकालमतिक्रम्य राश्यतर गन्तुकामस्तदा उक्तफलदाता न भवति । चेत् वक्रग क्रूरग्रहेण सयुक्तस्तदोक्तफलप्रद शनि स्यात् । अन्यत्स्पष्टम् ॥

यदि शनि शुभग्रह से युत अतिचारी हो तो शनि का पूर्वश्लोकोक्त फल नहीं होता है । यदि शनि वक्री और क्रूरग्रह से युत हो तो उक्त फल होता है । यदि शनि, राहु, भौम और सूर्य, गुरु, चन्द्रमा से युत हो तो उत्तर दिशा म स्थित चक्र के राजाका नाश होता है । यदि चार क्रूरग्रह बुध और चन्द्रमा से युत हों तो पूर्व दिशा में स्थित चक्र के राजा का नाश होता है । यदि चार क्रूरग्रह शुक्र और चन्द्र से युक्त हों तो दक्षिण दिशा स्थित चक्र के राजा का नाश होता है । इसी प्रकार अन्य राजाओं का भी जहां जिस चक्र में सभावना हो उन राजाओं का भी नाश कहना ॥ १२–१६ ॥

यथा दुष्टफलाः क्रूरास्तथा सौम्याः शुभप्रदाः ।
क्रूरयुक्तो बुधः क्रूरश्चन्द्रः शुभयुतः शुभः ॥ १७ ॥
यथा दुष्टफलः सौरिस्तथा सौम्यफलो गुरुः ।
भौमज्ञौ गुरुराहू च रविचन्द्रौ फले समौ ॥ १८ ॥
यथा हानिकराः क्रूरास्तथा सौम्याः शुभङ्कराः ।
क्रूरयुक्तो भवेत् क्रूरश्चन्द्रः सौम्ययुतः शुभः ॥ १९ ॥
सौम्यक्रूरा यदा छत्रे अष्टावेकत्र संस्थिताः ।
छत्रभङ्गो भवेत्तस्य परचक्रागमेन च ॥ २० ॥

यथा दुष्टफला इति । स्पष्टम् ॥ १७–२० ॥

जैसे क्रूरग्रह दुष्ट फल देते हैं वैसे ही शुभग्रह शुभफल देते हैं। क्रूरग्रह से युत बुध क्रूर होता है और चन्द्रमा शुभग्रह से युत हो तो शुभद होता है। जैसे शनि दुष्ट फल का दाता है वैसे ही गुरु शुभफल का दाता है, भौम बुध, गुरु राहु, रवि चन्द्रमा एक साथ हों तो समफल को करते हैं। जैसे क्रूरग्रह हानि करने वाले होते हैं वैसे ही शुभग्रह शुभ करने वाले होते हैं। चन्द्रमा क्रूरग्रह से युत क्रूर और शुभग्रह से युत हो तो शुभद होता है। जिस राजा के जन्म नक्षत्र पर शुभ पापग्रह मिल कर आठों एकत्र हों उस राजा का छत्रभंग अर्थात् नाश अवश्य होता है ॥ १७–२० ॥

अन्येषां भूभृतामृक्षं यत्र यत्र नृपत्रये ।
चामराद्यभिधानेन तस्य यन्नाम जायते ॥ २१ ॥
तत्तत्फलं तदा वाच्यमन्यदेशमहीपतेः ।
नृपतित्रयनाम्नैव न वाच्यं छत्रजं फलम् ॥ २२ ॥
भूपनामर्क्षगो राहुः केतुर्वा यदि संस्थितः ।
छत्रभङ्गो भवेत्तस्य विपदानेन भूपतेः ॥ २३ ॥
मृगयां साहसं यात्रां दुष्टाश्वगजवाहनम् ।
विग्रहं च त्यजेद्राजा छत्रस्थैः क्रूरखेचरैः ॥ २४ ॥
एवं ज्ञात्वा यदा राजा करोति ग्रहशान्तिकम् ।
यदुक्तं यामले तंत्रे शान्तिः स्यात्तेन भूपतेः ॥ २५ ॥

इति नरपतिजयचर्यायां स्वरोदये छत्रचक्राणि समाप्तानि ।

अन्येषाम् इति। अन्येषां भूभृतां राज्ञाम् ऋक्षं नक्षत्रं नृपत्रये अश्वपतिगजपतिनरपतिराज्यत्रये यत्र यत्र चामराद्यभिधानेन चामरं कलशं वीणादौ भवति तस्य तत्सञ्ज्ञोपलक्षितं नाम चामरादिसञ्ज्ञा भवति। तत्तदिति। तदा अन्यदेशमहीपतेः तत्तत्फलं नामानुरूपं फलमादिशेत्। यथा भरणीस्थः शनिः। कस्यापि अश्वपतिछत्रे राज्ञो भरणी जन्मनक्षत्रं वा नामनक्षत्रं कलशस्थं तदा तद्राज्ये युद्धं समादिशेत्। नृपतित्रयनाम्नैव पूर्वोक्तनृपतित्रयचक्रं केवलनाम्नैव छत्रजं फलं न समादिशेत्। भूपेति। सुगमम् ॥ २१-२४ ॥

अश्वपति, गजपति नरपति नाम के तीनों चक्रों में जिसमें जिस चामरादि खंड में अन्य राजाओं के नाम नक्षत्र या जन्म नक्षत्र पड़े उनकी वही संज्ञा होती है। उसी संज्ञा के अनुरूप उन राजाओं का फल कहना चाहिये। केवल तीनों चक्रों के नाम से ही फल नहीं कहना चाहिये। जैसे—यदि किसी राजा का भरणी नक्षत्र है और वह अश्वपति चक्र में उक्त नक्षत्र कलश में है और शनि भी भरणी में है अतः उस राजा के राज्य में युद्ध होगा ऐसा कहना चाहिये। राजा के नाम नक्षत्र पर राहु अथवा केतु हो तो उस राजा का विष देने से नाश होता है। यदि छत्रस्थ नक्षत्र पर क्रूरग्रह हो तो राजा आखेट, साहस का कार्य यात्रा, दुष्ट घोड़े और हाथी की सवारी और युद्ध न करें। इस प्रकार से दुष्ट फल को जानकर राजा यामल तंत्र में कहे हुये विधान से ग्रहों की शान्ति करें तो राजा को शुभफल की प्राप्ति होती है ॥ २१-२५ ॥

इति नरपतिजयचर्यायां छत्रचक्राणि।



# अथ सिंहासनचक्रम्

इत्येवं सम्प्रवक्ष्यामि चक्रं सिंहासनत्रयम्।
येन विज्ञानमात्रेण क्रियते राज्यनिर्णयः॥ १॥
सप्तविंशतिनक्षत्रैरेकैकं च नवात्मकम्।
अश्विनी-मघमूलाद्यं पंचनाडीविभेदतः॥ २॥
अश्विन्याद्युत्तरे भागे मघाद्य पूर्वतः स्थितम्।
मूलाद्यं दक्षिणे भागे ज्ञातव्यं नृपतित्रयम्॥ ३॥




अश्वपतिसिंहासनम् नरपतिसिंहासनम् गजपतिसिंहासनम्

इतरेषु च राज्येषु नृपनामर्क्षतो वदेत्।
शुभाशुभमिदं सर्वं यस्य यत्र शनिस्थितः॥ ४॥
नाडिकापञ्चवेधेन एकैकस्यासनं भवेत्।
आधारमासनं पट्टं सिंहं सिंहासनं तथा॥ ५॥
आधारादिफलं सर्वमेकैकस्य वदाम्यहम्।
ग्रहवेधवशाज्ज्ञेयं सौम्यक्रूरैः शुभाशुभम्॥ ६॥

इत्येवमिति—इत्येवं सिंहासनत्रयात्मकं चक्रं प्रवक्ष्यामि। येन ज्ञानमात्रेण राज्यनिर्णयः क्रियते। सप्तविंशतिनक्षत्रैरिति। सप्तविंशतिनक्षत्रैरेकैकं नवनवात्मकं मे सिंहासनत्रयात्मकं भवेत्, अश्विन्यादि मघादि मूलादि च पंचनाडीविभेदतः कृतं। अश्विन्यादीनि। तत्रोत्तरे भागेऽश्विन्यादि अश्वपते,

पूर्वतो मघाद्य नरपते, दक्षिणेभागे मूलाद्य गजपते एव सिंहासनत्रय भवति। इतरेष्विति। इतरेषु राज्येषु नृपनामनक्षत्रात्सिहासनत्रय वदेत्। यत्र भागे शनि तत्र सर्वथेद शुभाशुभफल भवति। नाडिकेति। नडिकापचवेधेन एकैकस्य भूपते आधारादिक्रमेण पच आसन भवति। अर्थात् सिंहासन पचमोपानक विरच्यते। तत्राद्य सोपानस्य आधारसज्ञा तदुपरि आसन, तदुपरि पट्टसज्ञ सोपान, तदुपरि सिंहसोपानम, तदुपरि सिहासनम्। यत्रस्थो राजा सिंहवद्भ्रजति। आधारादिफलमिति। स्पष्टम॥ १-६॥

इसी प्रकार तीन सिंहासन चक्र को कह रहा हूँ जिसके ज्ञान से राज्य के शुभ अशुभ का निर्णय होता है। प्रत्येक सिंहासन चक्र ९ नव नक्षत्रों के होते हैं जिसम पहला अश्विनी से, दूसरा मघा से और तीसरा मूल से रेवती पर्यन्त नव नक्षत्र का होता है। इसमें पचनाडी का वध होता है। पहला उत्तर भाग म अश्वपति का, दूसरा पूर्व म मघासे नरपति का और तीसरा मूल से गजपति का सिंहासन होता है। अन्य राजाओं के नाम नक्षत्र से तीन २ सिंहासन चक्र होते हैं जिस भाग में शनि हो उससे शुभ अशुभ फल का विचार करे। सिंहासन ५ सीढियों का होता है जैसा कि नीचे चक्र से स्पष्ट है। इसमें सबसे नीचे की सीढी की आधार सज्ञा, इसके ऊपर की सीढ़ी का आसन सज्ञा, इसके ऊपर के सीढ़ी की पट्ट सज्ञा, इसके उपर के सीढ़ी की सिंह सज्ञा और इसके ऊपर सिंहासन होता है जिसपर राजा बैठकर राजकार्य करता है। यही पाच नाडिकायें हैं। प्रत्येक आधारादि का फल शुभ और क्रूरग्रह के वेध द्वारा शुभ अशुभ फल कहना चाहिये॥ १-६॥

नृप आधारनाड्यृक्षे यदा पट्टेऽभिषेचितः।
पराधीनगतं राज्य कुरुते नात्र संशयः॥ ७॥
आसनस्थेन ऋक्षेण नीतियुक्तो भवेन्नृपः।
प्रधानपुरुषादेशात्प्रजाशान्तिकरो भवेत्॥ ८॥
पट्टऋक्षे यदा राजा चोपविष्टो यदासने।
पूर्वराज्यस्थितेस्तुल्यां चिरं पालयते महीम्॥ ९॥
सिंहरूपी भवेद्राजा सिंहऋक्षासने स्थितः।
सग्रामस्य प्रियो नित्यमसाध्यो मन्त्रिणा सदा॥ १०॥
सिंहासनगते ऋक्षे तेजस्वी भीषणाकृतिः।
चलचित्तो भवेत् क्रोधी प्रजापीडाकरो नृपः॥ ११॥

नृप इति। सुगमम्॥ ७-११॥

आधार में स्थित नक्षत्र में यदि राजा का राज्याभिषेक हो तो राजा दूसरे के अधीन रहकर राज्य करता है। आसन में स्थित नक्षत्र में राज्याभिषेक हो तो राजा नीतिमान् और उच्च अधिकारी की आज्ञा से प्रजा में शान्ति स्थापना करने वाला होता है। यदि पट्ट के नक्षत्र में राज्याभिषेक हो तो पूर्व राजा के समान ही पृथ्वी का शासन करता है। सिंह के नक्षत्र में यदि अभिषेक हो तो राजा सिंह के समान होता है और हमेशा युद्धप्रिय और मन्त्रियों के असाध्य होता है। यदि सिंहासन गत नक्षत्र में अभिषिक्त हो तो राजा तेजस्वी, भीषण आकृतिवाला, चञ्चलचित्त, क्रोधी और प्रजा को पीड़ा देने वाला होता है ॥ ७–११ ॥

तत्कालेन्दुगते ऋक्षे क्रूरनिर्वेधनाडिके।
शुभावस्था शुभे लग्ने संस्थाप्यो नृप आसने ॥ १२ ॥
ईदृशे च समायोगे उपविष्टो य आसने।
उच्छिद्य शत्रुसङ्घातमेकच्छत्रं करोति सः ॥ १३ ॥
क्रूरग्रहस्य नाड्यां चेदुपविष्टो य आसने।
बन्धनं भूमिनाशश्च तथा मृत्युश्च जायते ॥ १४ ॥
आधारऋक्षगः सौरिरनावृष्टिं करोति सः।
दुर्भिक्षं रौरवं घोरं प्रजामृत्युश्च जायते ॥ १५ ॥
आसने च यदा सौरिर्युद्धे भङ्गप्रदो भवेत्।
अथवा व्याधिपीडा च धातुदुःखं च जायते ॥ १६ ॥

तत्कालेन्दुगते इति। राज्याभिषेककालिकचन्द्रर्क्षे अन्यत् स्पष्टम् ॥१२–१६॥

राज्याभिषेक के समय जो नक्षत्र हो वही चन्द्रनक्षत्र है यह नक्षत्र क्रूरग्रह के वेध से रहित हो, चन्द्रमा शुभ अवस्था और शुभ लग्न में हो तो राज्याभिषेक करना चाहिये। इस प्रकार सर्वांश शुद्ध योग में जो राजा सिंहासन पर बैठता है वह सभी शत्रुवर्गों का नाश कर एकछत्र राज्य करता है। जो क्रूरग्रह की नाड़ी में सिंहासन पर बैठता है उस राजा के राज्य का नाश, बन्धन और मृत्यु होती है। यदि आधार के नक्षत्र पर शनि हो तो अनावृष्टि, घोर दुर्भिक्ष और प्रजा को पीड़ा होती है। आसन के नक्षत्र पर शनि हो तो युद्ध में पराजय अथवा व्याधि, पीड़ा और दुःख होता है ॥ १२–१६ ॥

पट्टऋक्षे यदा सौरिः पट्टराज्ञी विनश्यति।
प्रियो वाथ कुमारो वा मन्त्रिवर्गर्क्षयोऽपि वा ॥ १७ ॥

सिंहे सिंहासने चाथ यदा तिष्ठति सूर्यजः ।
तदा मृत्युर्न संदेहो यदि शक्रसमो नृपः ॥ १८ ॥
शनिराह्वर्कमाहेया यदा चन्द्रर्क्षसंयुताः ।
यस्यासनगता एते तदा तस्य क्षयंकराः ॥ १९ ॥
क्रूरयुक्तोऽतिवक्रस्थः क्रूरनाडीगतोपि वा ।
आसने चन्द्रयोगेन कालरूपी शनैश्चरः ॥ २१ ॥
एवं शुभफलं दद्याद्देवमन्त्री न संशयः ।
करोति विपुलं राज्यं यस्यासनगतो भवेत् ॥ २१ ॥

इति यामलीयस्वरोदये सिंहासनचक्रं समाप्तम् ।

पट्टऋक्षे इति । स्पष्टम् ॥ १७–२१ ॥

पट्ट के नक्षत्रों में शनि हो तो पटरानी अथवा प्रियकुमार या मन्त्रियों का नाश होता है। सिंह के या सिंहासन के नक्षत्र में शनि हो तो इन्द्र के समान राजा हो तो भी उसकी मृत्यु अवश्य होती है। यदि चन्द्रमा के नक्षत्र पर शनि, राहु, सूर्य और मंगल युक्त होकर जिस राजा के आसन में हों उसका नाश होता है। आसन के नक्षत्र में गया हुआ शनि क्रूरग्रह से युक्त होकर अतिवक्र हो, क्रूरनाडी में गया हो तो कालरूप होता है। इसी प्रकार यदि गुरु, शोभन वर्ग आदि में होकर जिसके आसन में गया हो उसके राज्य को बढ़ाता है इसमें संशय नहीं है ॥ १७–२१ ॥

इति सिंहासनचक्रम् ।



# अथ कूर्मचक्रम्

कूर्मचक्रं प्रवक्ष्यामि यदुक्तं कोशलागमे।
यस्य विज्ञानमात्रेण ज्ञायते देशविप्लवः॥ १॥
यस्य शृङ्गैकदेशस्था देवास्त्रित्रिशकोटयः।
सुमेरुः पृथिवीमध्ये श्रूयते दृश्यते न तु॥ २॥
तादृशाः पर्वताश्चाष्टौ सागरा द्वीपदिग्गजाः।
सर्वे ते विधृता भूम्या सा धृता येन तं शृणु॥ ३॥
दंष्ट्रया सा वराहेण विधृता सागरा धरा।
मुस्ताखननतोयस्य शोभते मृत्तिकेव या॥ ४॥
ईदृशोसौ महाकायो वराहः शेषमस्तके।
तस्य चूडामणेरूर्ध्वं संस्थितो मशकोपमः॥ ५॥
एवंविधः स शेषोपि कुण्डलीभूमिसंस्थितः।
कूर्मपृष्ठैकभागेन पद्मतन्तुरिवाबभौ॥ ६॥
वपुःस्कन्धशिरःपुच्छनखांघ्रिप्रभृतीनि च।
मानेन तस्य कूर्मस्य कथयामि प्रयत्नतः।
शङ्कोःशतसहस्राणि योजनानि वपुःस्थितम्॥ ७॥
तदर्धेन भवेत्पुच्छं पुच्छार्धेन द्विकुक्षिकम्।
ग्रीवा सायुतकोटीभिर्मस्तकं सप्तकोटिभिः॥ ८॥
नेत्रयोरन्तरं तस्य कोटिरेकप्रमाणतः।
मुखं कोटिद्वयं तस्य द्विगुणेन च पादयोः॥ ९॥
अङ्गुलीनां नखाग्रेषु योजनान्ययुतावधि॥ १०॥
एवं कूर्मप्रमाणं तु कथित चादियामले।
तस्योपरि स्थिता तत्र सप्तद्वीपयुता मही॥ ११॥
कूर्माकार लिखेच्चक्र सर्वावयवसयुतम्।
पूर्वभागे मुख तस्य पुच्छं पश्चिममण्डले॥ १२॥

कूर्मचक्र प्रवक्ष्यामि इति। स्पष्टम्॥ १-१२॥

अब मैं आदि यामल में कहे हुये कूर्मचक्र को कहता हूँ जिसके ज्ञान से देश के विप्लव का ज्ञान होता है। जिसके एक शृङ्ग प्रदेश में ३३ करोड देवता रहते हैं और सुमेरु पर्वत पृथ्वी के मध्य में है ऐसा सुना जाता है किन्तु देखने को नहीं। इसी प्रकार आठ और पर्वत, सागर दिग्गज द्वीप है जो कि इसी भूमि पर है



इन सब को जैसे धारण करते हैं उसे सुनो। सागरों के साथ इस पृथ्वी को वराह भगवान् ने अपने दाँतों पर इस प्रकार से धारण किया जैसे बहुत बड़े शरीर वाले वराह शेषनाग के मस्तक पर उनके चोटी के ऊपर मशक के समान स्थित है। इस प्रकार से वह शेष भी कुण्डली लगाकर भूमि पर कूर्म के पृष्ठ के समान स्थित है जैसे कमल की डण्डी। शरीर, कक्षा, शिर, पूँछ, नख, चरण प्रभृति अङ्गों का मान मैं कहता हूँ। एक शङ्कु (नील) को एक लाख से गुण देने से जो सख्या होती है अर्थात् दशशङ्ख के बराबर १००००००००००००००००००० योजन कूर्म का शरीर होता है। इसका आधा पृष्ठ और पृष्ठ का आधा दोनों कोंख (कुक्षि) और एक करोड दश हजार योजन की ग्रीवा, सात करोड योजन का मस्तक होता है। एक कोटि (करोड) योजन दोनों नेत्रों के मध्य भाग की दूरी, दो करोड योजन का मुख और चार करोड योजन के पैर और नख से अगुलियों का प्रमाण दशयोजन का होता है। इस प्रकार से आदि यामल में कूर्मचक्र को कहा है जिसके ऊपर सातद्वीपों से युक्त यह पृथ्वी है। इस प्रकार से सभी अवयवों से युक्त कूर्म को लिखना चाहिये। पूर्व दिशा में कच्छप का मुख और पश्चिम दिशा में पूँछ रहती है ॥ १-१२ ॥

पूर्वापर लिखेद्वेधं वेध चोत्तरदक्षिणे।
ईशानराक्षसे वेधं वेधमाग्नेयमारुते ॥ १३ ॥
नाभिशीर्षचतुष्पादकुक्षिपुच्छेषु सस्थितम्।
तारात्रयाङ्किते तस्मिन् सौरियतेन चिन्तयेत् ॥ १४ ॥
अतिवृष्टिरनावृष्टिः शलभा मूषकाः शुकाः।
स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः ॥ १५ ॥

कृत्तिका रोहिणी सौम्यं कूर्मनाभिगतं त्रयम्।
साकेतं मिथिला चम्पा कौशाम्बी कौशिकी तथा ॥ १६ ॥
अहिच्छत्रं गया विन्ध्यमन्तर्वेदी च मेखला।
कान्यकुब्जं प्रयागश्च मध्यदेशो विनश्यति ॥ १७ ॥
रौद्रं पुनर्वसुः पुष्यं कूर्मस्य शिरसि स्थितम्।
सगौडो हस्तिबन्धश्च पञ्चराष्ट्रं च कामरूः ॥ १८ ॥
चान्द्री च तथा ज्ञेया मगधश्च तथैव च।
रेवातटं च नेपालः पूर्वदेशो विनश्यति ॥ १९ ॥

पूर्वापरम् इति। स्पष्टम् ॥ १७–१९ ॥

इस चक्र में पूर्व, पश्चिम, उत्तर, दक्षिण, ईशान, नैर्ऋत्यकोण, अग्नि और वायव्य कोण का वध होता है। कूर्म के नाभि, शीर्ष, चारों पैर, कुक्षि के दक्षिण वाम भाग और पुच्छ इन ९ स्थानों में तीन ३ नक्षत्रों का न्यास कर शनि को देखना चाहिये कि वह कहाँ है। अतिवृष्टि, अनावृष्टि, शलभ (टिड्डा), मूषक, सुग्गा, अपन चक्र, परचक्र व नानाप्रकार के भय होते हैं। कृत्तिका, रोहिणी, मृगशिरा ये तीन नक्षत्र कूर्म के नाभि में कल्पना करनी चाहिये और इसमें साकेत, मिथिला, चंपा, कौशांबी, कौशिकी, अहिच्छत्र, गया, विंध्यप्रदेश, मेखला, कान्यकुब्ज, प्रयाग और मध्यदेश ये नगर हैं, नाभिगत नक्षत्र में शनि के होने से ये देश नष्ट होते हैं। आर्द्रा, पुनर्वसु, पुष्य कूर्म के शिर पर हैं और इसमें गौड, हस्तिबंध, पंचराष्ट्र, कामरू, चान्द्री, मगध, रेवोत्तरवर्ती देश, और नेपाल का नाश होता है ॥ १६–१९ ॥

(पूर्वाषाढाऽनलार्द्रा च त्रयाणां सम्मुखो व्यधः।
मूले ब्रह्मादितीनां च वेधो गुर्विन्दुवज्रिणाम् ॥ २० ॥)[1]
आश्लेषा च मघा पूर्वा पादे आग्नेयगोचरे।
अङ्गवङ्गकलिङ्गाश्च पूर्वजाश्चैव कोसलाः ॥ २१ ॥
डाहली च जयन्ती च तथा चैव सुलंजिका।
उड्डियानं वराटं च अग्निदेशो विनश्यति ॥ २२ ॥
उत्तराहस्तचित्राश्च दक्षिणां कुक्षिमागताः।
दर्दुरं च महेन्द्रं च वनवासं ससिंहलम् ॥ २३ ॥
तापी भीमरथी लङ्का त्रिकूटं मलयस्तथा।

---

१ इति श्लोकद्वयं पाठोऽधिकः पुस्तकान्तरे।

श्रीपर्वतश्च किष्किधा इति नश्यन्ति दक्षिणे ॥ २४ ॥
स्वाती विशाखा मैत्रं च कूर्मे नैर्ऋतिगोचरे ।
नासिक्यं च सुराष्ट्रं च धृतमालवकं तथा ॥ २५ ॥
पर्यली च प्रकाशं च भृगुकच्छं च कोकणम् ।
खेटापुरं च मोटेरं देशा नश्यन्ति तादृशाः ॥ २६ ॥
ज्येष्ठा मूलं तथाषाढा पुच्छे कूर्मस्य संस्थिताः ।
पारावत मरुत्कच्छमवंतीप्रवमालवम् ॥ २७ ॥
पारासर बर्बर च द्वीप सौराष्ट्र-सैंधवम् ।
जलस्थाश्च विनश्यंति स्त्रीराज्यं पुच्छपीडने ॥ २८ ॥
उत्तराषाढभत्रीणि पादे वायव्यगोचरे ।
गुर्जराह्वं यामुनं च मरुदेश सरस्वती ॥ २९ ॥
जालंधरं वराटं च बालुकोदधिसयुतम् ।
मेरुशृंगं विनश्यति ये चान्ये कोणसस्थिताः ॥ ३० ॥
शतभादित्रय चैव उत्तरां कुक्षिमाश्रितम् ।
नैपालं कीरकाश्मीर गृजनं खुरसानकम् ॥ ३१ ॥
माथुरं म्लेच्छदेशाश्च खशा केदारमडलम् ।
हिमाश्रयाश्च नश्यंति देशा ये चोत्तराश्रिताः ॥ ३२ ॥
रेवती अश्विनी याम्यं पादे ईशानगोचरे ।
गंगाद्वारं कुरुक्षेत्रं श्रीकंठ हस्तिनापुरम् ॥ ३३ ॥
अश्वचर्मैकपादाश्च गजकर्णास्तथैव च ।
विनश्यंति च ते सर्वे शनावीशानगोचरे ॥ ३४ ॥

आश्लेषा च इति—स्पष्टम् ॥ २८–३४ ॥

श्लेषा, मघा, पूर्वाफाल्गुनी ये तीन नक्षत्र कूर्म के अग्नि कोण के पैर में हैं इसमें शनि के होने से अङ्ग, वग, कलिङ्ग, कोसल, डाहली, सुलयिका, उडियाम और वराड देश नष्ट होते हैं। उत्तराफाल्गुनी, हस्त, चित्रा ये नक्षत्र दाहिने कोख (कुक्षि) में हैं इसमें शनि के होने से दुर्दुर, महद्द, वनवास, सिंहल, तापी, मागीर्था, लङ्का, त्रिकूट, मलय, श्रीपर्वत, किष्किन्धा ये देश नष्ट होते हैं। स्वाती, विशाखा, अनुराधा ये नक्षत्र कूर्म के नैर्ऋत्य कोणस्थित पैर में हैं इसमें शनि का वेध होने से नासिक,

समकालं पीडयेद्यत्र भानुजः कूर्मपञ्चकम् ।
तत्र स्थाने महाविघ्नं जायते नात्र संशयः ॥ ४६ ॥
दुष्टस्थानगते मदे कर्त्तव्यं तत्र शांतिकम् ।
यदुक्तं यामले तंत्रे सर्वविघ्नविनाशनम् ॥ ४७ ॥
कूर्मचक्रं महाचक्रं कथितं चादियामले ।
त्रिकालविषयज्ञानं पाणिस्थं तेन जायते ॥ ४८ ॥

इति नरपतिजयचर्यायां स्वरोदये कूर्मपञ्चचक्राणि समाप्तानि ।

गृह के नाम नक्षत्र से गृहद्वार में कूर्म के मुख की कल्पना कर चक्र को बनावे । गृहमध्य में शनि हो तो शोक-संताप को करनेवाला, गृहद्वार में हो तो विद्युत् और अग्नि का भय । दक्षिण भाग में हो तो मृत्यु, नैर्ऋत्य कोण में हो तो राक्षस से भय, पश्चिम में हो तो शुभद, वायव्यकोण में हो तो शून्य फल, उत्तर में हो तो धन लाभ, ईशानकोण में हो तो शून्य फल । उत्तर में हो तो धन लाभ, ईशानकोण में हो तो सब प्रकार की सिद्धि । यदि शनि अत्यंत बली हो तो दुष्ट होता है और अल्पबली हो तो शुभद होता है । एक ही समय यदि शनि पाँचों कूर्मों में वेध करता हो तो उस स्थान में बड़ा विघ्न होता है । शनि दुष्ट स्थान में हो तो यामलोक्त सभी विघ्नों को नाश करने वाले शान्ति को करना चाहिये । आदि यामल में कहा हुआ महाचक्र नामका कूर्मचक्र कहा जिसके ज्ञान से तीनों काल के विषय को जाना जा सकता है ॥ ४२–४८ ॥

इति नरपतिजयचर्यायां कूर्मपञ्चचक्राणि



## अथ पद्मचक्रम्

पद्माकारं लिखेचक्रमष्टपत्रं सुशोभनम् ।
कोष्ठकं नवमं मध्ये पद्मचक्रं प्रजायते ॥ १ ॥
कृत्तिकादीनि भान्यत्र त्रीणि त्रीणि यथाक्रमम् ।
मध्यकोष्ठादिरुद्रान्तं सप्तविंशति विन्यसेत् ॥ २ ॥
नवखंडा धरित्रीयं नवभागेषु संस्थिता ।
यत्र खंडे स्थितः सौरिः खण्डं तच्च विनश्यति ॥ ३ ॥
भद्राश्वः किंपुरुषं च हरिवर्षस्तथैव च ।
मेरुश्च दक्षिणे देशे खण्डोयमीरितस्त्रिभिः ॥ ४ ॥
रम्यं हिरण्मयं चैव कुरुखण्डस्तथैव च ।
मेरुश्चोत्तरतश्चैव त्रिभिः प्रोक्तादियामले ॥ ५ ॥
केतुमालश्च यो नाम खण्डो मेरुश्च वारुणे ।
भरतेषु च विख्यातो पूर्वदिङ्मेरुतः स्थितः ॥ ६ ॥
इलावृतश्च नामानि खण्डोयं मेरुसंस्थितः ।
नवखण्डमिदं प्रोक्तं कथितं चादियामले ॥ ७ ॥

इति पद्मचक्रम् ।

अष्टपत्र कमल सुन्दर नव कोष्ठ का बनाना चाहिये । सभी कोष्ठों में कृत्तिका से तीन तीन नक्षत्र मध्यकोष्ठ से ईशानकोण पर्यन्त लिखै । यह पृथ्वी नवखण्डों की है यही इस पद्म में न्यास करके जहाँ शनि हो वहाँ नाश होता है । इस चक्र में कृत्तिका से तीन तीन नक्षत्र ईशानकोण तक ९ कोष्ठ में २७ नक्षत्रों को रखना चाहिये । यह नवखंड की पृथ्वी इन नवों भागों में विभक्त है, जिस खंड में शनि होता है उस खंड का नाश करता है । सुमेरु से दक्षिण में भद्राश्ववर्ष, किंपुरुष, और हरिवर्ष ये देश हैं मेरु से



उत्तर में रम्यकवर्ष, हिरण्मय, और कुरुखंड ये तीन वर्ष हैं । मेरु से पश्चिम में

केतुमालखंड और पूर्व में भारतवर्षखंड है। इलावृतखंड मेरु में है यही आदि यामल में कहा गया है ॥ १–७ ॥

अथ सप्तद्वीपफणिचक्रम्

कृत्तिकादि लिखेच्चक्रं सर्पाकारं फणीश्वरम् ।
सप्तनाडीसमायुक्तं तत्र वेधं विलोकयेत् ॥ १ ॥
नाड्यैकैकसमायोगे जम्बूद्वीपादि गण्यते ।
सप्त द्वीपाः क्रमेणैव तत्र सौरिं विचिन्तयेत् ॥ २ ॥
जम्बूद्विपस्तथा शाकः कुशः क्रौञ्चश्च शाल्मलः ।
गोमेदः पुष्करद्वीपः पीड्यन्ते सौरिपीडया ॥ ३ ॥

इति सप्तद्वीपफणिचक्रम् ।

कृत्तिका से सप्त नाडियों से युक्त एक सर्प के आकार का चक्र लिखे और उसमें वेध को देखै ॥१॥ एक २ नाडियों में क्रम से जंबूद्वीपादि सात द्वीप क्रम से हैं उसमें



१ जंबू २ शाक ३ कुश ४ क्रौंच ५ शाल्मल ६ गोमेद ७ पुष्कर

शनि को देखै ।२। जंबूद्वीप, शाक, क्रौंच, शाल्मली, गोमेद और पुष्कर ये सात द्वीप हैं जहाँ शनि हो उसे पीडा होती है ॥ १–३ ॥

इति सप्तनाडीचक्रम्

अथ राहुकालानलचक्रम् ।

अथातः सम्प्रवक्ष्यामि व्याख्याता ब्रह्मयामले ।
राहुकालानलोयाग्रासश्च प्रत्ययकारिणी ॥ १ ॥
ग्रहयोगवशाद्याश्राज्योतिःशास्त्रेषु भाषिता ।
या सा शुभेषु कार्येषु फलदा न तु संगरे ॥ २ ॥
यस्य च्छायाप्रभावेण छाद्येते शशिभास्करौ ।
तस्य राहोः प्रभावश्चवक्ष्येऽहं रणकर्मणि ॥ ३ ॥

केचिन्मूर्खा वदन्त्येव ग्रहो राहुरकारणम् ।
यतो वर्षे दिने लग्ने आधिपत्यं न दृश्यते ॥ ४ ॥
आधिपत्ये स्थिता ये च वर्षे मासे दिने तथा ।
ते चाधिकारिणो ज्ञेया राहुराजेतियामले ॥ ५ ॥

अब मैं ब्रह्मयामल में कहे हुये राहुकालानल को कहता हूँ। राहुकालानल के द्वारा यात्रा सिद्धिदायक होती है। ज्योति शास्त्र में ग्रहों के योगवश से जो यात्रा कही गई है वह शुभ कार्य में फल देने वाली होती है न कि सग्राम में। जिसके छाया के प्रभाव से चन्द्रमा और सूर्य आक्रांत होते हैं उस राहु का प्रभाव मैं रण कार्य में कहूँगा। कोई मूर्ख अकारण राहु को ग्रह कहते हैं क्योंकि वर्ष, मास, दिन, लग्न आदि में कहीं उसका स्वामित्व नहीं देखते हैं। जिसका वर्ष मास दिन में आधिपत्य है वह अधिकारी राहु राजयामल में कहा गया है ॥ १–५ ॥



वेदागमपुराणेषु व्याख्यातो राहुखेचरः ।
तस्य माहात्म्यमज्ञात्वा मिथ्या जल्पति स्वल्पवित् ॥६॥
दुष्टारिष्टेषु सर्वेषु जातकादिषु गण्यते ।
सद्यः प्रत्ययदो राहुः स कथं स्यादकारणम् ॥ ७ ॥
यः कालरूपो भ्रमति संहारेण महीतले ।
स वक्रदंष्ट्रया रौद्रो ज्ञेयो राहुर्न संशयः ॥ ८ ॥
ग्रहा भ्रासभयाद्यस्य सृष्टिमार्गे भ्रमन्ति च ।
तस्य नामान्यहं वक्ष्ये मुखपुच्छक्रमेण च ॥ ९ ॥
राहुश्चैव तमः पात. स्वर्भानुः सिंहिकासुत. ।
दैत्यच्छाया शिरोवक्र ग्रहारिश्च विधुन्तुदः ॥ १० ॥

वेदागम पुराणेषु इति । स्पष्टार्थाः । ६–१०

जिस राहु को वेद आगम पुराणों में राहु ग्रह कहा गया है उसके माहात्म्य

को न जानकर व्यर्थ ही मूर्ख लोग बोला करते हैं। जातक ग्रथों में सर्वत्र दुष्ट अरिष्ट में सब राहु की गणना होती रहती है वह राहु अकारण क्यों है? जो कालरूपी राहु हमेशा कालरूपी पृथ्वी पर घूमा करता है वह टेढ़े दाँत वाला रौद्र रूप राहु ही है इसमें संशय नहीं।८। जिसके ग्रास कर लेने के भय से ग्रह लोग मन मार्ग मे चलते हैं उसका नाम मैं मुख पौंछ के अनुसार कहता हूँ। राहु को तम, पात, स्वर्भानु सिंहिकासुत, दैत्यच्छाया शिर, पवग, ग्रहारि और विधुन्तुद कहते हैं॥ ९–१० ॥

पुच्छं केतुः शिखी सर्पो गुदं गुह्यं तट मतम्।
उत्पातो विषगर्भश्च धूम्रकायो ग्रहान्तिमः॥ ११ ॥
कक्षाधारगतो राहुः सर्परूपेण संस्थितः।
तस्य चक्रं प्रवक्ष्यामि राहुकालानलात्मकम्॥ १२ ॥
शलाकासप्तकं चक्रमीशादौ कृत्तिकादिकम्।
अष्टाविंशति नक्षत्रं साभिजित्सव्यमालिखेत्॥ १३ ॥
यत्रर्क्षे संस्थितो राहुर्वदनं तद्विनिर्दिशेत्।
मुखात्पञ्चदशे ऋक्षे तस्य पुच्छं व्यवस्थितम्॥ १४ ॥
एकोत्तरशतं संख्या जायन्ते यत्र केतवः।
व्याप्नुवन्ति जगत्सर्वं सहस्रार्कसमत्विषः॥ १५ ॥

राहु के पोछ को केतु कहते हैं, सर्प, गुद, गुह्य, तट, उत्पात, विषगर्भ, धूम्रकाय, ग्रहांतिम ये इसके उपनाम हैं। नक्षत्र के आधार पर सर्प के आकार का राहु है उसके चक्र को राहु कालानल कहते हैं जिसे मैं कहता हूँ। सप्तशलाका में ईशानकोण से कृत्तिकादि २८ नक्षत्र अभिजित् के सहित लिखना चाहिए। जिस नक्षत्र पर राहु हो वहाँ राहु का मुख होता है और मुख से १५ वें नक्षत्र पर राहु का पोंछ होता है। १०१ केतु होते हैं जो कि सूर्य के सहस्रकिरण के समान संपूर्ण संसार में व्याप्त हैं॥ ११–१५ ॥



राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश।
त्रयोदशैव भोग्यानि मृतपक्षः प्रकीर्तितः ॥ १६ ॥

मृतपक्षे मुखं तस्य गुदं जीवाङ्गमध्यमम्।
एवमङ्गद्वयो राहुर्ज्ञातव्यः स्वरपारगैः ॥ १७ ॥

जीवपक्षे क्षपानाथे मृतपक्षे रवौ तथा।
तस्मिन्काले शुभा यात्रा विपरीता तु हानिदा ॥ १८ ॥

राहु जिस नक्षत्र पर है उससे पीछे के १३ नक्षत्रों की जीव पक्ष संज्ञा होती है। और १३ भोग्य नक्षत्रों की मृत संज्ञा होती है। जैसे राहु रेवती पर है तो उससे भुक्त १३ नक्षत्र अश्विनी से हस्त पर्यन्त जीवपक्ष, और चित्रा में केतु हुआ इसके बाद स्वाती से अभिजित् के साथ गणना करने से १३ नक्षत्र भोग्य मृतपक्ष संज्ञक होते हैं। राहु का मुख मृतपक्ष में और पोछ जीवपक्ष में समझना चाहिये इस प्रकार राहु के दो प्रधान अंग जानना चाहिये। जिस समय जीवपक्ष के नक्षत्रों में चन्द्रमा हो और मृतपक्ष के नक्षत्रों में सूर्य हो उस समय यात्रा करने से शुभ फल की प्राप्ति होती है अन्यथा हानिकारक होती है ॥ १६–१८ ॥

चन्द्रादित्यौ यदा युक्तौ जीवपक्षे व्यवस्थितौ।
तत्र क्षेमं जयो लाभो यात्राकाले न संशयः ॥ १९ ॥

मृतपक्षे यदा काले संस्थितौ शशिभास्करौ।
तदा हानिर्भयं भङ्गो मृत्यू राज्ञां प्रजायते ॥ २० ॥

जीवपक्षे स्थिते चन्द्रे कार्यं स्यादमृतोपमम्।
मृतपक्षे मृतं ज्ञेयं यतश्चन्द्रबलाबलम् ॥ २१ ॥

चन्द्रादित्यौ इति। सुगमम् ॥ १९–२१ ॥

यदि यात्रा समय चन्द्रमा और सूर्य दोनों जीवपक्ष में स्थित हों तो यात्रा में कुशल, विजय और लाभ होता है। यदि दोनों रवि चन्द्रमा मृतपक्ष में हों तो यात्रा में हानि, भंग, और मृत्यु होती है। जीवपक्ष में चन्द्रमा हो तो कार्य अमृत के समान होता है और मृतपक्ष में हो तो मृतक के समान होता है क्योंकि सभी कार्यों में चन्द्रबल ही प्रधान होता है ॥ १९–२१ ॥

इति द्विपांगराहुचक्रम्।

अथ पञ्चाङ्गराहुः ।

अथ(१) पञ्चाङ्गभेदेन राहुचक्रं वदाम्यहम् ।
मुखोदरौ गुदं पुच्छं कपालं तस्य पञ्चमम् ॥ १ ॥
राहुः पातस्तमो बिम्बं सैंहिकेयश्चक्रगो ग्रहः ।
धूम्रपुच्छो ग्रहग्रासः सूर्याङ्गः केतुरुच्यते ॥ २ ॥
मुखाद्यङ्गस्य नामानि फलं चापि वदाम्यहम् ।
भ्रमणाच्चन्द्रसूर्यस्य पञ्चाङ्गर्क्षे विधुन्तुदः ॥ ३ ॥
यत्रर्क्षसंस्थितो राहुस्तस्य नामानि वच्म्यहम् ।
गलितं कर्तरी जिह्वा चन्द्रगं वदनं तथा ॥ ४ ॥
राहुभक्षाग्रतो यानि भुक्तभानि त्रयोदश ।
उदरं सम्पुटं जीवं कामाङ्गं जठरं च हृत् ॥ ५ ॥

इति द्वितीयाङ्गम् ।

पाँच अंगों के भेद से राहु चक्र को कह रहा हूँ। मुख, उदर, गुद, पुच्छ और कपाल ये प्रथम पाँच अंग हैं। राहु को पात, तम, बिंब, सैंहिकेय, चक्रग ग्रह कहते हैं। धूम्र, पुच्छ, ग्रहग्रास, सूर्यांग और केतु भी कहते हैं। मुख आदि अंगों के नाम और फल को कहूँगा। चन्द्रमा और सूर्य के भ्रमण से पाँचों अंगों के नक्षत्र में जहाँ राहु हो उसके नाम कह रहे हैं। जिस नक्षत्र पर राहु रहता है उसके गलित, कर्तरी, जिह्वा, चन्द्रग, वदन नाम हैं। राहु के नक्षत्र से आगे १३ भुक्त नक्षत्रों की उदर, सम्पुट, जीव, कामांग, जठर या हृदय नाम हैं ॥ १-५ ॥

उदरादग्रनक्षत्रं यत्पञ्चदशमं मुखात् ।
गुदमुद्गिलितं गुह्यं केतुश्चन्द्राङ्गकर्तरी ॥ ६ ॥

इति तृतीयाङ्गम् ।

उदर या मुख से अर्थात् राहु जिस नक्षत्र पर है उससे १५ नक्षत्रों की गुद, उद्गिलित, गुह्य, केतु, चन्द्रांग और कर्तरी नाम हैं ॥ ६ ॥

गुदभान्यग्रतो यानि ऋक्षाणि रससंख्यया ।
पुच्छं सूर्याङ्गचक्राङ्गं षष्ठो मृत्युः क्रमेण च ॥ ७ ॥

(१) अथ पञ्चाङ्गभेदेन राहुचक्रं वदाम्यहम् । इत्यारभ्य यन्त्रद्वय तदा यान्ति शीघ्रतो यमनन्दिरम् ॥ इत्यन्ताः ३७ श्लोकाः प्रक्षिप्ताः ।

शेषाणि सप्तभान्यत्र मध्यस्थान्यास्यपुच्छयोः ।
कपालं मस्तकं शीर्षं रुद्राङ्गं भोग्यमण्डलम् ॥ ८ ॥

इति पञ्चमाङ्गम् ।

गुद नक्षत्र से आगे ६ नक्षत्रों की पुच्छ, सूर्यांग, वज्रांग, पृष्ठ और मृत्यु नाम है । मुख पुच्छ के मध्य में ७ नक्षत्रों को कपाल, मस्तक, शीर्ष, रुद्राग और भोग्य मडल कहते हैं ॥ ७–८ ॥

स्थिररूपस्थितो भानुश्चररूपश्च चन्द्रमाः ।
क्रमेणैकैकयोगानां वक्ष्येहं योगपञ्चकम् ॥ ९ ॥
राहुवक्त्रे स्थिते सूर्ये चन्द्रे कामाङ्गसंस्थिते ।
यायिनो विजयस्तत्र स्थायिनो भङ्गमाहवे ॥ १० ॥
चन्द्राङ्गसंस्थिते सूर्ये गुदे चन्द्रे समाश्रिते ।
अग्रयायी जयेद्युद्धे बलार्द्धं च क्षयं गते ॥ ११ ॥
भास्करे गलिताङ्गस्थे चन्द्रे वज्राङ्गसंस्थिते ।
बलद्वयं क्षयं याति किञ्चित्स्थायी जयी रणे ॥ १२ ॥

स्थिर रूप सूर्य और चररूप चन्द्रमा का है । इन दोनों के योग से पाच योग होते हैं । राहु के मुख में सूर्य हो और चन्द्रमा कामाग में हो तो यायी ( चढ़ाइ करने वाले की विजय होती है और स्थायी (गढ म बैठा हुआ) हार जाता है । चन्द्राग म सूय हो और चन्द्रमा गुद में हो तो जो आगे चढ़ाई करता है वह विजयी होता है । सूर्य गिलिताग में हो और चन्द्रमा वज्रांग में हो तो दोनों का नाश होता है किन्तु कुछ स्थायी की विजय होती है ॥ ९–१२ ॥

राहुनक्षत्रगो भानुश्चन्द्रो रुद्राङ्गगो रणे ।
स्थायिनो विजयो युद्धे यायिनो मृत्युमादिशेत् ॥ १३ ॥
यदा भवेतां चन्द्रार्कौ राहुवक्त्राङ्गसंस्थितौ ।
सैन्ययोश्च क्षयस्तत्र सदैवायायिनो जयः ॥ १४ ॥

राहु नक्षत्र से पीछे ७ नक्षत्रों में रुद्रांग में सूर्य चन्द्र हों तो स्थायी राजा की विजय और यायी की मृत्यु होती है । यदि रविचन्द्रमा दोनों वज्रांग में हों तो दोनों के सैन्यों का नाश होता है, सदह से यायी का लाभ होता है । ॥ १३–१४ ॥

सविता जीवपक्षे च निशानाथो गुदे स्थित ।
निर्दिष्टःस्थायिनो भङ्गो यायिनःसक्षतोजयः ॥ १५ ॥

उदरस्थो यदा भानुः शशाङ्को वक्रमास्थितः ।
हेलया जीयते स्थायी यायी च म्रियते रणे ॥ १६ ॥
कामाङ्गस्थे दिवानाथे मस्तकस्थे निशाकरे ।
स्थायिनो विजयस्तत्र यायिनश्च कुलक्षयः ॥ १७ ॥

सूर्य जीवयष्य में हो और चन्द्रमा गुद में हो तो स्थायी की हार और यायी चोट खाकर विजयी होता है । सूर्य उदर में हो और चन्द्रमा वक्त्र में हो तो खेल ही में स्थायी विजयी होता है और यायी समाम में मारा जाता है । कामांग में सूर्य हो और मस्तक में चन्द्रमा हो तो स्थायी की विजय और यायी के कुल का नाश होता है ॥ १५–१७ ॥

सम्पुटस्थो यदादित्यो जिह्वायां चन्द्रमाः स्थितः ।
स्थायी च भङ्गमायाति किञ्चिद्यायी जयी रणे ॥ १८ ॥
जठरस्थो यदा भानुश्चन्द्रस्तत्रैव संस्थितः ।
देवानपि जयेद्यायी किम्पुनः मनिम धलम् ॥ १९ ॥

सपुट में सूर्य हो और जिह्वा में चन्द्र हो तो स्थायी की हानि और यायी की कुछ विजय होती है । जठर में सूर्य और चन्द्र दोनों हों तो यायी देवताओं को भी जीत लेता है मनुष्यसेनाओं के लिये क्या कहना है ॥ १८–१९ ॥

चन्द्राङ्गस्थो यदादित्यः सूर्याङ्गे चन्द्रमाः स्थितः ।
समयुद्धं भवेत्तत्र किञ्चिदागन्तुको जयी ॥ २० ॥
गुदे तीक्ष्णांशुसंयुक्ते कपालस्थोथ शीतगुः ।
यायी च भज्यतेवश्यं स्थितः स्थायी जयं विना ॥ २१ ॥
गुदभे संस्थितः सूर्यो राहुभे संस्थितः शशी ।
यदा महाहवो घोरः किञ्चित्स्थायी जयी भवेत् ॥ २२ ॥

चन्द्रांग में सूर्य हो और सूर्यांग में चन्द्रमा हो तो युद्ध में दोनों की समता होती है किन्तु किसी दूसरे आगन्तुक की विजय होती है । गुद में सूर्य हो और कपाल में चन्द्रमा हो तो निश्चय कर यायी पराजय होता है स्थायी ज्यों का त्यों रहता है । गुद नक्षत्र में सूर्य हो राहु नक्षत्र में चन्द्रमा हो तो बड़ा विकट युद्ध होता है और स्थायी की कुछ विजय होती है ॥ २०–२२ ॥

भानुक्षेत्रस्थितो भानू रुद्रक्षेत्रे च चन्द्रमाः ।
यायिनो मृत्युमाप्नोति जयलाभौ स्थितस्य च ॥ २३ ॥

सूर्याङ्गे च सहस्रांशुर्जिह्वायां शीतगुः स्थितः ।
यायिनश्च जयं दद्यात्स्थायिनो भङ्गमादिशेत् ॥ २४ ॥
पुच्छपट्के यदादित्यो जीवाङ्गे चन्द्रमाः स्थितः ।
यायी विजयते तत्र शक्रतुल्येपि वैरिणि ॥ २५ ॥
भास्करे राहुपृष्ठस्थे मृगाङ्के गुदमाश्रिते ।
समयुद्धं भवेत्तत्र किञ्चिद्यायी जयी भवेत् ॥ २६ ॥
सूर्याचन्द्रमसौ यत्र वज्राङ्गे समुपस्थितौ ।
द्वयोस्तु बलयोस्तत्र वधो भवति निश्चितम् ॥ २७ ॥

भानुक्षेत्र अर्थात् राहु के नक्षत्र से १६ वें से ६ नक्षत्र में सूर्य हो और रुद्राङ्ग अर्थात् २२ वें नक्षत्र से ७ नक्षत्र में चन्द्रमा हो तो यायी की मृत्यु और स्थायी को विजय तथा लाभ होता है । सूर्याङ्ग में सूर्य और जिह्वा ( राहु के नक्षत्र में ) में चन्द्रमा हो तो यायी की विजय और स्थायी की हानि होती है । पुच्छ के ६ नक्षत्र याने सूर्याङ्ग में सूर्य हो और जीवाङ्ग में चन्द्रमा हो तो यायी की विजय होती है चाहे शत्रु इन्द्र के समान हो तो भी । राहु पृष्ठ अर्थात् सूर्याङ्ग में सूर्य हो और गुद में (अर्थात् १५ वें नक्षत्र में) चन्द्रमा हो तो दोनों की युद्ध में समानता होती है किन्तु यायी की कुछ विजय होती है । यदि दोनों सूर्य चन्द्रमा वज्राङ्ग में हों तो दोनों के सैन्यों का नाश होता है ॥२३–२७॥

रुद्राङ्गस्थे दिवानाथे राहुजिह्वाङ्गतः शशी ।
स्थायिनस्तु जयस्तत्र भङ्गो भवति यायिनः ॥ २८ ॥
कपालसंस्थिते सूर्ये सम्पुटस्थो यदा शशी ।
यायिना जीयते शत्रुरनायासेन नान्यथा ॥ २९ ॥
मस्तकस्थे दिवानाथे रात्रिनाथे गुदस्थिते ।
यायी च विजयी युद्धं स्थायिनश्च पराजयः ॥ ३० ॥
राहुशीर्षस्थितो भानुर्भानुक्षेत्रे निशाकरः ।
अन्योन्यविग्रहो घोरो जायते नरपालयोः ॥ ३१ ॥
यदा रुद्राङ्गसंयुक्तौ दिवानाथनिशाकरौ ।
बलद्वयं तदा याति शीघ्रतो यममन्दिरम् ॥ ३२ ॥

इति पञ्चाङ्गराहुकालानलम् ।

राहुर्भक्षस्थितो भानुश्चन्द्रस्तत्रैव संस्थितः ।
न कश्चिज्जयमाप्नोति सैन्ययोरुभयोः क्षयः ॥ १६ ॥

इति मुखादियोगषट्कम् ।

स्थिररूपस्थित इति । अङ्गानि मुखादीनि तेषाम् एकैकशः प्रत्येक क्रमाद्योगषट्कं भवति एवं षट्त्रिंशद्योगाः भवन्ति । तत्र भानुः स्थिररूपः चन्द्रः चररूपः एवं अयमर्थः भानुः स्थिररूपः एकः ह्यङ्गे तिष्ठति चन्द्रमाः शेषाङ्गे भ्रमति एवं प्रत्येकस्मिन्नङ्गे षड्योगा भवन्ति । राहुचक्रे इति स्पष्टम् ॥ १०–१६ ॥

सूर्य स्थिर रूप और चन्द्रमा चर रूप होता है अर्थात् सूर्य किसी एक अंग में रहता है और चन्द्रमा के अन्य अंगों में होने से प्रत्येक अंगों के ६ योग होते हैं। यदि राहु के मुख में सूर्य हो और चन्द्रमा हृदय में हो तो यायी ( चढ़ाई करनेवाला ) की विजय और स्थायी का नाश होता है। मुख में सूर्य और उदर में चन्द्रमा हो तो आगे चढ़ाई करने वाला विजयी होता है। सूर्य लिङ्गभाग में हो और चन्द्रमा केतु अंग में हो तो स्थायी का नाश और यायी की विजय होती है। मुख में राहु और पीठ में चन्द्रमा हो तो स्थायी की विजय और यायी की मृत्यु होती है। राहु की जिह्वा में सूर्य और चन्द्रमा स्कन्ध में हो तो दोनों सेनाओं में भंग हो जाता है अर्थात् दोनों में से किसी की भी विजय नहीं होती है। मुख नक्षत्र में राहु हो और उसी में चन्द्रमा भी हो तो किसी की विजय नहीं होती किन्तु दोनों का नाश होता है ॥ १०–१६ ॥

हृदयस्थे दिवानाथे जठरस्थे निशाकरे ।
निर्दिष्टः स्थायिनो मृत्युर्यायी जयति निर्व्रणः ॥ १७ ॥

हृदयस्थो यदा भानुः शशाङ्को गुदमाश्रितः ।
हेलया जयते यायी स्थायी च म्रियते रणे ॥ १८ ॥

कामाङ्गस्थे दिवानाथे पुच्छपट्के निशाकरे ।
स्थायिनो विजयस्तत्र यायिनश्च पराजयः ॥ १९ ॥

सम्पुटस्थो यदादित्यो रुद्राङ्गे चन्द्रमाः स्थितः ।
यायी न भङ्गमाप्नोति किञ्चित्स्थायी जयी रणे ॥ २० ॥

कामाङ्गस्थे दिवानाथे चन्द्रे राहुमुखस्थिते ।
सङ्ग्रामे विजयी स्थायी यायिनो भङ्गमादिशेत् ॥ २१ ॥

हृदयाङ्गे यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ ।
दैत्यानपि जयेद्यायी किम्पुनर्मानवं बलम् ॥ २२ ॥

इति हृदयादियोगपट्कम् ।

यदि सूर्य हृदय के नक्षत्रों में और पेट के नक्षत्र में चन्द्रमा हो तो स्थायी की मृत्यु होती है और विना किसी घाव के यायी की विजय होती है। यदि हृदय में सूर्य हों और चन्द्रमा गुद नक्षत्र में हो तो सहज में ही यायी की विजय और स्थायी की मृत्यु होती है। कामाङ्ग ( जीवपक्ष के आदि सात नक्षत्र ) में सूर्य हों और पुच्छ ( मृतपक्ष के आदि ६ नक्षत्र ) में चन्द्रमा हो तो स्थायी की विजय और यायी की पराजय होती है। यदि सूर्य सपुट ( हृदय ) में रक्ताङ्ग ( मृतपक्ष के अन्तिम सात नक्षत्र ) में चन्द्र हो तो यायी की हानि और स्थायी की साधारण विजय होती है। हृदय में सूर्य और चन्द्रमा राहु मुख में हो तो युद्ध में स्थायी की विजय और यायी की पराजय होती है। यदि दोनों हृदयाग में ही हों तो यायी देवताओं के समान बल पाये सैन्य को जीत लेता है मनुष्य की सेना को क्या कहता है ॥ १७–२२ ॥

उदरस्थे दिवानाथे निशानाथे गुदस्थिते ।
समं युद्धं भवेत् तत्र किञ्चिद्यायी जयी रणे ॥ २३ ॥
सम्पुटस्थो यदा भानुः पुच्छे भवति चन्द्रमाः ।
यायिभङ्गो जयी स्थायी तत्र काले न संशयः ॥ २४ ॥
कामाङ्गस्थः सहस्रांशुर्मस्तकस्थो निशाकरः ।
याता भङ्गमवाप्नोति स्थानवासी जयी रणे ॥ २५ ॥
भानावुदरगे यत्र निशेशो राहुवक्त्रगः ।
अग्रयायी क्षयी तत्र स्थायी जयति नान्यथा ॥ २६ ॥
स्वर्भानूदरगो भानुर्हृदये तारकाधिपः ।
अनायासेन सङ्ग्रामे यायिनो जयमादिशेत् ॥ २७ ॥
उदराङ्गे यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ ।
तदा सन्धिर्न सन्देहः सैन्ययोरुभयोरपि ॥ २८ ॥

इत्युदरादियोगपट्कम् ।

उदर के नक्षत्रों ( जीव पक्ष के शेष ६ नक्षत्र ) में सूर्य और गुदा के नक्षत्र में चन्द्रमा हो तो दोनों का बराबर युद्ध होता है किन्तु यायी कुछ विजयी होता है।

कपालसंश्रितः सूर्यः सम्पुटस्थो यदा शशी ।
यायिना जीयते शत्रुः स्थायिनो भङ्गमादिशेत् ॥ ४३ ॥
कपालसस्थिते सूर्ये धिष्ण्यनाथे गुदस्थिते ।
यायिनो विजया युद्धे स्थायिनस्तु पराजयः ॥ ४४ ॥
राहुशीर्षस्थितो भानुः पुच्छक्षेत्रे निशाकरः ।
अन्योन्यविग्रहं घोरं युद्धं भवति दारुणम् ॥ ४५ ॥
दिनेशो राहुरुद्राङ्के चन्द्रस्तत्रैव संस्थितः ।
विनाशं कोशराष्ट्रस्य यायिनो मृत्युमादिशेत् ॥ ४६ ॥

इति कपालादियोगपट्टकम् ।

रुद्रांग ( मृतपद का अन्तिम ७ नक्षत्र ) में सूर्य हो और राहु के नक्षत्र में चन्द्रमा हो तो स्थायी की विजय और यायी की हानि होती है। शीर्ष स्थान में सूर्य हो और चन्द्रमा हृदय में हो तो बिना युद्ध के ही यायी स्थायी के सभी पदार्थों को ले लेता है। कपाल में सूर्य हो और संपुट में चन्द्रमा हो तो यायी की विजय और स्थायी की हानि होती है। कपाल में सूर्य हो और चन्द्रमा गुद में हो तो युद्ध में यायी की विजय और स्थायी की पराजय होती है। शीर्ष स्थान में सूर्य हो और पुच्छ में चन्द्रमा हो तो दोनों (स्थायी यायी) का परस्पर घोर विग्रह और युद्ध होता है। यदि दोनों रवि चन्द्रमा शीर्ष स्थान में ही हों तो खजाना और देश दोनों का नाश तथा यायी की मृत्यु होती है ॥ ४१–४६ ॥

हृदयादीनि चाङ्गानि जिह्वान्तानि क्रमेण च ।
दशसंख्यान्यहं वक्ष्ये राहुचक्रस्य मध्यतः ॥ १ ॥
पुष्पितं फलितं चैव निष्फलं छटितं गुदम् ।
राजसं तामसं वृद्धं मृतं जिह्वां क्रमेण च ॥ २ ॥
पुष्पिते त्रीणि चत्वारि फलिते निष्फले त्रयम् ।
छटिते त्रीणि ऋक्षाणि गुदे चैकं भवेत्तथा ॥ ३ ॥
राजसे त्रीणि ऋक्षाणि तामसे च तथा त्रयम् ।
वृद्धे चतुष्टयं त्रीणि मृतौ चैकं तथा मुखे ॥ ४ ॥
त्रीणि पुष्पितऋक्षाणि क्षेमलाभकराणि च ।
शत्रुभङ्गो भवेद् युद्धे यात्रा मासेन लाभदा ॥ ५ ॥

ततश्चत्वारि धिष्ण्यानि पक्षैकेन फलन्ति च।
गजवाजिधनं देशं यायी तु लभते ध्रुवम् ॥ ६ ॥
अफलाख्यत्रिधिष्ण्येषु षण्मासे यायिनं प्रति।
सन्धिं सेवां तथा देशं यायी प्राप्नोति निश्चितम् ॥ ७ ॥
फलं प्राप्नोति वर्षेण छदितैश्च त्रितारकैः।
गोधनान्यरिवृन्दानां यायी लुण्ठति च ध्रुवम् ॥ ८ ॥
शुदऋक्षे जयं लक्ष्मीं पद्मिनीं प्रियवादिनीम्।
रूपयौवनसम्पन्नां स्त्रियं प्राप्नोति निश्चितम् ॥ ९ ॥
विग्रहस्य भवेद्वृद्धिर्युद्धे भङ्गस्तथैव च।
रोगपीडा भवेद्वर्षे राजसाख्यैस्त्रितारकैः ॥ १० ॥
हस्त्यश्वपुत्रमित्रादि-देशकोशपरिग्रहाः।
षड्भिर्मासैर्विनश्यंति यायिनस्तामसत्रये ॥ ११ ॥
तामसोग्रे चतुष्के च तारका वृद्धसंज्ञकाः।
सर्वनाशकराः प्रोक्ता मासैकेन न संशयः ॥ १२ ॥
ततस्त्रिमृत्युऋक्षाणि राज्ञां मृत्युकराणि च।
अर्थनाशश्च युद्धं च पक्षैकेन फलं स्मृतम् ॥ १३ ॥
यद्धे भङ्गं महाभीतिर्द्रव्यनाशं कुलक्षयम्।
सद्यो मृत्युं लभेद्यायी राहुचक्रे सुनिश्चितम् ॥ १४ ॥

इति दशाङ्गराहुकालानलशुभाशुभफलम्।

हृदय से जिह्वा पर्यन्त दश अंगों वाला राहुचक्र को कहता हूं। (१) पुष्पित, (२) फलित, (३) निष्फल, (४) छदित, (५) शुद, (६) राजस, (७) तामस, (८) वृद्ध, (९) मृत, (१०) जिह्वा ये ही दश अंगों के नाम हैं। जीवपद के प्रथम ३ नक्षत्रों को पुष्पित कहते हैं इसमें यात्रा करने से क्षेम, लाभ, शत्रु का नाश होता है और एक मास में यात्रा का फल प्राप्त होता है। इसके बाद के चार नक्षत्रों की फलित संज्ञा है इसमें यात्रा करने से यायी हाथी, घोड़ा, धन और देश को प्राप्त करता है। इसके आगे के तीन नक्षत्रों की निष्फल संज्ञा है इसमें यात्रा करने से यायी को स्थायी ६ मास के अन्दर ही सन्धि करके देश और धन आदि देता है। इसके बाद के ३ नक्षत्रों की छदित संज्ञा है इसमें यात्रा करने से यायी

तत अश्विन्यादिभुज्यमाननक्षत्रस्य पूर्वनक्षत्रसख्या लब्ध भुक्तनक्षत्रे सयोज्य सप्तविशत्यधिके सति सप्तविशत्या वष्टितेऽवशिष्ट भुक्तनक्षत्रमश्विन्यादितो भवति । ग्रहान्तराणामप्यनेन प्रकारेण ज्ञेयम् । स्थिरचक्रे इति । यथा स्थिरचक्रे द्विधाङ्गादौ मया पुरा पूर्व फल कथित तथा यत्र द्विधाङ्गे चरचक्रे षडङ्गदशाङ्गयोरप्यनेनैव तात्कालिकप्रकारेण फल वदेत् । तात्कालिकश्चन्द्रो रविश्च यत्राङ्गे जायते तत्र पूर्वोक्तक्रमेण फल भवतीति । अन्यत स्पष्टम् ॥ १–११ ॥

युद्ध के समय यदि शीघ्र ही यात्रा का योग न प्राप्त हो तो तात्कालिक चन्द्र और सूर्य का साधन कर योग का विचार करना चाहिये। इष्टनाडी को २७ से गुणकर ६० का भाग देने से जो लब्धि हो उसमें चन्द्रमा के भुक्त नक्षत्र को जोड़ देने से तात्कालिक चन्द्रमा का नक्षत्र होता है। चन्द्रमा के समान इष्टकालिक सूर्य के नक्षत्र का भी साधन करना चाहिये। क्योंकि दोनों ( चन्द्र रवि ) अहोरात्र में नक्षत्र मण्डल में घूमते रहते हैं। पहले मैं स्थिरचक्र ( द्विधांगादि राहुचक्र ) म चन्द्र और रवि के अनुसार फल कह चुका हूँ। उसी प्रकार से तत्काल चन्द्र रवि से फल को कहना चाहिये। सभी शुभ कार्यों म किन्तु विशेषकर यात्रा समय में हृदय, गुदा और उदर म स्थित चन्द्रमा शुभद होता है। पीछे के ६ नक्षत्रों में और कपाल तथा राहुमुख में चन्द्रमा हो तो सभी कार्यों म रुकावट, हानि और मृत्यु होती है। हृदय, गुदा और उदर म चन्द्रमा हो तो ऐसे समय में विवाह होने से दोनों वर कन्या प्रसन्न होते हैं। मुख, पुच्छ और मस्तक में चन्द्र हो तो दरिद्रता, विद्वेष और वैर होता है। प्रश्न समय में पुष्पित, फलित नक्षत्र में चन्द्रमा हो तो शुभद होता है। अफल, छदित सज्ञक नक्षत्र में हो तो मध्यम और शेषाग म हो तो मृत्यु होती है। ऊपर खेचरचक्र और नीचे भूचरचक्र होता है दोनों के मध्य से राहुकालानल चक्र होता है। राहु जिस नक्षत्र पर हो उससे आगे १४ नक्षत्रों की खेचर सज्ञा होती है, जैसे कृत्तिका पर राहु है उससे आगे रोहिणी आदि १४ नक्षत्रों की खेचर सज्ञा है। इसी प्रकार राहु के गत १४ नक्षत्रों की भरणी आदि की भूचर सज्ञा है। इस कालानल चक्र को लोभ, भय, स्नेह तथा कार्यकारण के वश से किसी को नहीं देना चाहिये किन्तु गोप्य रखना चाहिये। जो शिष्य बहुत दिन तक सेवा कर चुका हो उसको बार बार परीक्षा करके इस राहुकालानल चक्र को देना चाहिये ॥ १– १ ॥

उदाहरण—सवत् २०१७ फाल्गुन कृष्ण ५ शनिवार को धनिष्ठा नक्षत्र में सूर्य ३८ घ० ५९ प० पर प्रवेश करता है और फाल्गुन शुक्ल ३ शनिवार को ४८ घ० ४५ प० पर शतभिष म प्रवेश करता है। और फाल्गुन शुक्ल १ गुरुवार को १५ घटीपर तात्कालिक रवि चन्द्र का साधन करना है। फाल्गुन कृष्ण ३० को धनिष्ठा नक्षत्र २३ घ०। ३५ प० है और फाल्गुन शुक्ल १ को शतभिष २० घ० १० प० है। अत शतभिष का भयात ४१।२५ और भभोग ५६।२५ हुआ। यहाँ जो भयात

है वही इष्टघटी है उसे २७ से गुणा किया तो १११८।१५ हुआ। यहां ६० से भाग देना चाहिये किन्तु ६० उपलक्षण मात्र है वस्तुतः सर्वर्क्ष से ही भाग देना उचित प्रतीत होता है। अतः सवर्णित भाज्य ६७०९५ में सवर्णित भाजक भभोग ३३८५ से भाग देने से लब्धि १९ हुई इसमें चन्द्रमा के गत नक्षत्र २३ को जोड़कर २७ से भाग देने से शेष १५ बचा अतः तात्कालिक चन्द्रमा विशाखा नक्षत्र पर हुआ।

तात्कालिक सूर्य का साधन—धनिष्ठा का सर्वर्क्षदिन १३ घटी ५१ पल १ हुआ। धनिष्ठा प्रवेश दिन से इष्ट दिन के घटी तक सूर्य की इष्टघटी ६२१। १ हुई इसको २७ से गुणा किया तो गुणनफल १६७६७। २७ हुआ यह भाज्य हुआ इसको सवर्णित करने से १००६०४७ हुआ इसमें सवर्णन किये हुये सर्वर्क्ष ४९८६१ से भाग दिया तो लब्धि २० आई इसमें सूर्य के गतनक्षत्र संख्या २२ को जोड़ देने से ४२ हुआ इसमें २७ से भाग देने से शेष १५ गत नक्षत्र सूर्य का स्वाती हुआ और वर्तमान विशाखा नक्षत्र हुआ। इसी प्रकार सभी ग्रहों के नक्षत्रों को साधन करना चाहिये।

## अथ सूर्यकालानलम्।

ऊर्ध्वगास्त्रित्रिशूलाग्रास्तिस्रस्तिर्यक् च संस्थिताः।
द्वे द्वे नाड्यौ स्थिते कोणे शृङ्गयुग्मं तथैकया ॥ १ ॥
मध्ये त्रिशूलदण्डाधो भानुभाद्यं भमण्डलम्।
साभिजिच्च प्रदातव्य सव्यमार्गेण सर्वदा ॥ २ ॥
नामऋक्षं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम्।
अधो गतैस्त्रिनक्षत्रैरुद्वेगो वधबन्धनम् ॥ ३ ॥
कोणाष्टके जयो लाभः कुक्षिषट्के तथा पुनः।
शृङ्गयुग्मे रुजो भङ्गो मृत्युः शूलं त्रये स्फुटम् ॥ ४ ॥
सूर्यभात् त्रिचतुःपञ्चरससप्ताष्टगोमिते।
गतगम्यर्क्षके लाभजयौ शेषे रुजो मृतिः ॥ ५ ॥
विवाहे विग्रहे युद्धे रोगार्ते गमने तथा।
सूर्यकालानलं चक्रं ज्ञातव्यञ्च प्रयत्नतः ॥ ६ ॥
रोगे च कुजनक्षत्रं दिनऋक्षं तु युद्धके।
प्रयाणे कृत्तिकालग्नमन्यत्रार्कं प्रदीयते ॥ ७ ॥
इति सूर्यकालानलचक्रं समाप्तम्।




ऊपर नीचे अर्थात् ऊर्ध्वाधर तीन रेखा जिसके अग्र में त्रिशूल हो खींचे और तीन आड़ी रेखा खींचे। दो २ नक्षत्र कोण में और दोनों शृंगों में एक २ नक्षत्र रखना चाहिये। मध्य त्रिशूल के नीचे से सूर्य के नक्षत्र से अभिजित् के सहित २८ नक्षत्रों को क्रमक्रम से रखना चाहिये। नाम का नक्षत्र जहां हो उससे शुभ अशुभ फल का विचार करना चाहिये। अध रेखास्थित ३ नक्षत्र में उद्वेग, बंध और बंधन होता है। कोण के आठ ८ नक्षत्रों में तथा मध्य के ६ नक्षत्रों में विजय और लाभ होता है। दोनों शृंग के नक्षत्र में रोग और हानि तथा त्रिशूल के ९ नक्षत्रों में नाम नक्षत्र हो तो मृत्यु होती है। विवाद, विग्रह, युद्ध, रोग और यात्रा में इस सूर्यकालानल चक्र का विचार करना चाहिये ॥ १–५ ॥

चन्द्रकालानल चक्र व्योमाकारं लिखेत्ततः।
चतुर्दिक्षु त्रिशूलानि मध्यभिन्नानि कारयेत् ॥ १ ॥
पूर्वत्रिशूलमध्यस्थ दिनऋक्षादिलिख्यते।
त्रिशूले च बहिर्मध्ये मध्ये बहिस्त्रिशूलके ॥ २ ॥
नामऋक्षं स्थित यत्र ज्ञेयं तत्र शुभाशुभम्।
त्रिशूले चक्रबाह्ये च चक्रमध्ये तथैव च ॥ ३ ॥
त्रिशूलेषु भवेन्मृत्युर्मध्यमं बहिरष्टके।
लाभक्षेमौ जयः प्रज्ञा चन्द्रगर्भे न संशयः ॥ ४ ॥
वर्जनीयं प्रयत्नेन प्रथमाष्टत्रिपञ्चकम्।
ऋक्षं द्वाविंशकं चात्र कालरूपं न संशयः ॥ ५ ॥
दिनभाद् द्वे त्रयं शैलाग्नितय च चतुर्दशात्।
चन्द्रकालानले काले एकविंशतितस्त्रये ॥ ६ ॥
लाभालाभं सुखं दुःखं चैव पराजयः।
चन्द्रकालानले चक्रे ज्ञानं संशयवर्जितम् ॥ ७ ॥

चन्द्राष्टके जयो लाभो मध्यशूर्पाष्टके मतः ।
राह्वष्टके भवेद्व्याधिर्मृत्युः केतुचतुष्टये ॥ ८ ॥

इति चन्द्रकालानलम् ।

चन्द्रकालानलमिति । व्योमाकार मडलाकारमन्यत्स्पष्टम् ॥ १-७ ॥

एक गोलाकार चक्र बनाकर चारो दिशाओं म मध्य को वेध करता हुआ त्रिशूल को बनावे यही चन्द्रकालानल चक्र होता है। पूर्व दिशा स्थित त्रिशूल के मध्य से दिन नक्षत्र से त्रिशूल, उसके बाहर मध्य और मध्य बाहर तथा त्रिशूल म क्रम से २८ नक्षत्रों को रखे। त्रिशूल में चक्र में बाहर चक्र मध्य म इस क्रम से नक्षत्रों को रखकर जहाँ नाम का नक्षत्र हो उससे शुभ अशुभ फल का विचार करे। त्रिशूल के नक्षत्रों में नाम नक्षत्र हो तो मृत्यु होती है उसके बाहर क आठ नक्षत्रों म हो तो मध्यम फल होता है गर्भ क नक्षत्रों में हो तो क्रम से लाभ, कुशल, विजय, शुभ फल होता है इसमें सशय नहीं है। प्रथम नक्षत्र से ८ वा १५ वां और २२ वा नक्षत्र इस चक्र में कालरूप होता है। लाभ, हानि, सुख, दुःख, विजय, पराजय का ज्ञान इस चन्द्र कालानल चक्र में जाना जा सकता है इसमें सशय नहीं है ॥ १-६ ॥



इति चन्द्रकालानलचक्रम् ।

अथ घोरकालानलम् ।

शलाकासप्तक चक्रं लिखित्वा चन्द्रभादितः ।
त्रिषु त्रिषु च ऋक्षेषु नव सूर्यादयो ग्रहाः ॥ १ ॥
यदङ्के नामनक्षत्रं दिनऋक्षादि जायते ।
फलं तस्य प्रवक्ष्यामि एकैकस्य यथाक्रमम् ॥ २ ॥
भानुना शोकसन्तापौ शशाङ्कः क्षेमलाभदः ।
भूसुतो मृत्युमाधत्ते बुधे प्रज्ञा प्रजायते ॥ ३ ॥
जीवे लाभः शुभं शुक्रे सूर्यपुत्रे महद्भयम् ।
राहुणा घातपातं च केतौ मृत्युर्न संशयः ॥ ४ ॥

यात्राजन्मविवाहेषु सङ्ग्रामे विग्रहेऽपि वा।
घोरकालानलं चक्रं ज्ञात्वा कर्म समारभेत् ॥ ५ ॥

इति घोरकालानलम्।

सप्तशलाका चक्र लिखकर ईशान्य कोण से चन्द्रमा के नक्षत्र से नक्षत्रों को स्थापित कर तीन २ नक्षत्रों पर सूर्यादि ग्रहों को स्थापित करै। दिन नक्षत्र से गिनने से जिस ग्रह के अंश में नाम नक्षत्र हो उसका फल क्रम से कहता हूँ। सूर्यांश में हो तो शोक और सन्ताप, चन्द्रांश में कुशल और लाभ, भौमांश में मृत्यु, बुधांश में बुद्धि की वृद्धि होती है। गुरु के अंश में लाभ, शुक्र के अंश में शुभ और शनि के अंश में बड़ा भय होता है। यात्रा जन्म, विवाह, संग्राम और विग्रह में इस घोर कालानल से विचार कर जो दिन शुद्ध हो उस दिन उक्त कार्यों को करै ॥ १–५ ॥




अथ सप्तशलाकाचक्रम्।

तीर्यगूर्ध्वगता रेखाः सप्तसङ्ख्या लिखेद्बुधः।
कृत्तिकादीनि भान्यत्र साभिजिति क्रमेण च ॥ १ ॥
भुक्तं क्रान्तं तथा भोग्यं विद्धं क्रूरग्रहेण भम्।
शुभाशुभेषु कार्येषु वर्जनीयं प्रयत्नतः ॥ २ ॥
यस्याभिधाननक्षत्रं विद्धं क्रूरग्रहेण च।
देशो ग्रामः पुरं सैन्यं नरो नारी विनश्यति ॥ ३ ॥

इति सप्तशलाकाचक्रम्।

सात तिरछी और सात सीधी रेखाओं को लिखे और उनपर ईशानकोण से कृत्तिका से आरम्भ कर अभिजित् सहित सभी नक्षत्रों को लिखै। क्रूरग्रह से युक्त भोग्य

१ ग्रन्थान्तरे—रोगार्त्ते कुजनक्षत्राद् युद्धादौ रविभात्क्रमात्। गमने वह्निभाद्यन्ते चन्द्रकालानलं क्रमात्।

तथा आक्रांत नक्षत्र को शुभ अशुभ कार्यों में प्रयत्न कर त्याग देना चाहिये। जिस मनुष्यादि का नाम नक्षत्र क्रूरग्रह से विद्ध हो उस देश, ग्राम, पुर, सेना, मनुष्य, स्त्री का नाश होता है ॥ १-३ ॥

### अथ पञ्चशलाका।

तिर्यगूर्ध्वगताः पञ्च द्वे द्वे रेखे च कोणगे।
ईशकोणाग्ररेखातः कृत्तिकादि लिखेद् बुधः ॥ १ ॥
विशाखाकृत्तिकावेधो भरणीमित्रदेवयोः।
धनिष्ठा सार्पयोर्वेधो मघाश्रवणयोस्तथा ॥ २ ॥
शुभाशुभग्रहैर्विद्धं भं विवाहे विवर्जयेत्।
द्व्यादिविद्धं महादुष्टं राहुविद्धं तथैव च ॥ ३ ॥

इति पञ्चशलाकाचक्रम्।

तिर्यगूर्ध्वगता इति। सुगमम् ॥ १-३ ॥

पाच तिरछी और पांच सीधी रेखाओं को खीचे तथा दो २ रेखाकोण में खीचे। ईशान्य कोण की रेखा के आगे से कृत्तिकादि २८ नक्षत्रों को लिखै। इसमें विशाखा और कृत्तिका का वेध भरणी और अनुराधा का, धनिष्ठा और श्लेषाका तथा मघा और श्रवण का वेध होता है। शुभग्रह तथा पापग्रह से वेध किये जाते हुये नक्षत्र को विवाह में त्याग देना चाहिये। दो आदि ग्रहों से तथा राहु से वेध हो तो वह नक्षत्र बड़ा अशुभ होता है ॥ १-३ ॥



### अथ वक्रचन्द्रचक्रम्।

वक्रेन्दुसदृशं चक्रं त्रित्रिशूलसमन्वितम्।
मध्ये द्वादशभान्यत्र षट् पृष्ठे नव शूलके ॥ १ ॥
मध्यशूलस्य मध्यस्थं शशभृदृक्षमादितः।
सव्येन गणयेच्चक्रं यावन्नोधस्य नामभम् ॥ २ ॥
शृङ्गे मृत्युर्जयो मध्ये पृष्ठे भङ्गो महाहवे।
चातुरङ्गे कवौ कोटे द्वन्द्वयुद्धे विशेषतः ॥ ३ ॥

इति स्वरोदये वक्रचन्द्रचक्रम्।

नामवर्णस्य या संख्या मात्रासंख्या तथैव च ।
पिण्डिता नवभिर्भक्ता जयो मात्राधिके रणे ॥ ३ ॥

बारह खड़ी रेखा और पाँच तिरछी रेखा को लिखने से चक्र बन जाता है। इसमें मातृकाओं को लिखे किन्तु चार व ऋ ॠ लृ ॡ और अन्तिम अः स्वर को छोड़कर लिखे। कोष्ठों के नीचे क्रम से दो कोष्ठों में पाँच २, तीन कोष्ठों में तीन २, दो कोष्ठों में छ २, तीन कोष्ठों में आठ २ और शेष एक कोष्ठ में ९ इन अङ्कों को लिखे। नाम के वर्ण और मात्रा की जो संख्या हो उसे एकत्र कर ९ से भाग दे अधिक शेष वाले योधा का संग्राम में विजय होती है ॥ १–३ ॥

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | आ | इ | ई | उ | ऊ | ए | ऐ | ओ | औ | अं |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | ष | स | ह |
| ५ | ५ | ३ | ३ | ३ | ६ | ६ | ८ | ८ | ८ | ९ |

उदाहरण—देवदत्त और यज्ञदत्त दोनों के युद्ध में कौन विजयी होगा। य = ३, अ = ४, ग = ३, य = ३, अ = ४, द = ६, ४ = ४, न = ३, अ = ५=३८, इसमें नव ९ से भाग देने से २ शेष बचा। इसी प्रकार द = ६, ए = ६, व = ६, अ = ४, द = ६, थ = ५, त = ३, अ = ५ = ४२ इसमें ९ से भाग देने से ६ शेष बचा। देवदत्त से यज्ञदत्त का पराजय होगा।

*अथ तृतीयमातृकास्वरचक्रम् ।*

मनुमार्तण्डदोर्बाणतिथ्यभ्वरसदिग्गजाः ।
भवान्तास्तदधः स्थाप्याः पञ्चस्वरकखादितः ॥ १ ॥
ङञणोनान् हकारान्तान् नवधा कोष्ठकक्रमैः ।
नाममात्राक्षराङ्कैक्यं सप्तशेषाधिके जयः ॥ २ ॥

दस रेखा सीधी और छ रेखा तिरछी लिखने से ४५ कोष्ठ का चक्र होता है। इसमें क्रम से १४।१२।२।५।१५।७।६।१०।८ अङ्कों को ऊपर की पंक्ति में लिखकर दूसरी पंक्ति में पाँच स्वरों अ, इ, उ, ए, ओ को लिखकर कवर्गादि वर्णों को ङ ञ णा को छोड़कर हकार तक लिखे। नव कोष्ठों में लिखकर योधाओं के नाम की मात्रा और वर्णों का योग कर सात से भाग देने से जिसका अधिक शेष होता है वह विजयी होता है ॥ १–२ ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १४ | १२ | २ | ५ | १५ | ७ | ६ | १० | ८ |
| अ | इ | उ | ए | ओ | क | ख | ग | घ |
| च | छ | ज | झ | ट | ठ | ड | ढ | त |
| थ | द | ध | न | प | फ | ब | भ | म |
| य | र | ल | व | श | ष | स | ह | क्ष |

अथ चतुर्थमातृकाचक्रम् ।

भुवनादित्यदोर्बाणतिथिवेदाश्वदिक् रसान् ।
वसुनन्दादिकान् लिख्य षडान्त्योज्झितमातृकान् ॥१॥
पुन्नामर्णमात्राणां स्वाङ्कयोगेष्टशेषिते ।
मात्राधिको जयी युद्धे मात्राहीनः पराजयी ॥ २ ॥

इति चतुर्थमातृकाचक्रम् ।

१२ सीधी रेखा और ६ रेखा तिरछी लिखने से ५५ कोष्ठ का चक्र होता है। प्रथम पंक्ति में १४।१२।२।५।१५।४।७।१०।६।८।९ इन अंकों को लिखे। इसके नीचे की पंक्ति से १६ स्वरों में चार ऋ ॠ ऌ ॡ नपुंसक स्वरों और अन्तिम स्वर अः को छोड़कर शेष स्वर और हकार तक वर्णों को लिखे। योधाओं के नाम के वर्ण और मात्रा के अंकों का योग कर ८ से भाग देने से जिसका अधिक शेष होता है वही विजयी होता है ॥ १–२ ॥

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १५ | १२ | २ | ५ | १५ | ४ | ७ | १० | ६ | ८ | ९ |
| अ | आ | इ | ई | उ | ऊ | ए | ऐ | ओ | औ | अं |
| क | ख | [illegible] | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | [illegible] | स | ह |

अथ आयचक्रम् ।

आयचक्रे द्वादशोर्ध्वा रेखाः षट् तिर्यगाश्रिताः ।
मनु-नक्षत्र-दस्रा-ऽर्क तिथि षट्-सागरा-ऽग्नयः ॥ १ ॥
अथ सप्तदशाष्टौ च रन्ध्रान्त विलिखेत्क्रमात् ।
ततः स्वरानषण्ढांश्च वर्णांश्च ङञणोज्झितान् ॥ २ ॥

अत्राक्षराधःस्थैः स्वै स्वैरङ्कैः सङ्कलितं भवेत् ।
वसुभिर्भाजिते शेषे आया ध्वजमुखादयः ॥ ३ ॥
ध्वजो धूम्रोऽथ सिंहः श्वा सौरभेयः खरो गजः ।
ध्वांक्षश्चैते क्रमेणैव आयाष्टकमुदाहृतम् ॥ ४ ॥
काकाद्वली श्वा च भवेत्सारमेयाच्च रासभः ।
बलवान् रासभादुक्षा वृषभादपि कुञ्जरः ॥ ५ ॥
कुञ्जरादपि पञ्चास्यः सिंहादपि बली ध्वजः ।
ध्वजादपि बली धूम्रस्तथा जातिविशेषतः ॥ ६ ॥
भागहारेण शून्यत्वादष्टमः परिगृह्यते ।
एकाद्यैः शेषभूताङ्कैर्ध्वजाद्याश्चायचक्रभात् ॥ ७ ॥
आयचक्रमिदं प्रोक्तं यत्सुरैरपि दुर्लभम् ।
अत्र नामाक्षरादीनां युक्तिरन्या प्रदर्श्यते ॥ ८ ॥
जयाजयपरीक्षाया स्वरोदयपरिश्रिताल् ।
शोडशाक्षरवर्गः स्यात्कादयः पञ्च वर्णकाः ॥ ९ ॥
चतुश्चतुष्कवर्णौ च यशौ वर्गाः प्रकीर्तिताः ।
नाम्नि वर्णात्स्वरात्संख्या वर्गवर्णवशाच्च सा ॥ १० ॥

| १४ | १७ | २ | १२ | १५ | ६ | ४ | ३ | १३ | ८ | ८ |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | आ | इ | ई | उ | ऊ | ए | ऐ | ओ | औ | अ |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | ष | स | ह |

अथ निजयचक्रम् ।

अथ सारतरं वक्ष्ये लम्पटाचार्यभाषितम् ।
जयपराजयौ येन नामोच्चारणतः स्फुटौ ॥ १ ॥
लग्नालग्नविभेदेन घोपाघोपक्रमेण च ।
प्रवेशानिर्गमाभ्यां च क्रमाज्जयपराजयौ ॥ २ ॥

पवर्गश्चाप्युकारश्च लग्नाख्यानक्षरान् विदुः ।
उक्तवर्णान्यवर्णाः स्युरलग्नाः परिकीर्तिताः ॥ ३ ॥

वर्गे त्रिचतुरा घोषाः पञ्चमाश्च स्वरास्तथा ।
आद्या द्वितीया वर्णानामघोषाः शषसैः सह ॥ ४ ॥

वायुप्रवेशकालः स्यात् प्रवेशः श्वासनिर्गमः ।
निर्गमाख्यस्ततो ज्ञेयो नामोच्चारणतो जयः ॥ ५ ॥

इति स्वरोदये विजयचक्रम्

अथेति । सुगमम् । लग्नालग्नेति । लग्नालग्नविभेदेन लग्नाक्षरयोर्भेदेन घोषाघोषक्रमेण, कानि चिदक्षराणि घोषाणि कानि चिदघोषाणि तयो क्रमेण प्रवेशनिर्गमाभ्या च प्रवेशनिर्गम इति द्वे वायुभेदौ ताभ्या क्रमाज्जयपराजयौ आद्येन जयो द्वितीयेन पराजय तेषु क्रमात् ज्ञातव्य । प्रथमप्रश्नाक्षरेणैतत्सर्वं चिन्तनीयम् । पवर्ग इति । पवर्ग पफबभमउकारोष्मणा सहित ऊष्मा च ( शल ऊष्माण ) शषसह एतान्यक्षराणि लग्नाख्यो लग्ननायक । उक्ताक्षरादन्ये अक्षरा षोडशस्वरेण सहिता अलग्ना ज्ञेया । घोषा इति । वर्गाणा तृतीयचतुर्थवर्णा सानुनासिका ङ ञ ण न अनेन सहिता अर्थात् गघङजझञ, डढण। दधन, बभम, लवसहा सस्वरा षोडशस्वरेण सहिता घोषा सर्ववर्गके आद्यद्वितीयौ वर्णौ शषवर्णै सह अघोषा । वायुरिति । नासापुटे वायुप्रवेशकाल प्रवेश । तत एव श्वासनिर्गमकाल निर्गमाख्य काल । अन्यत्स्पष्टम् ॥ १-५ ॥

स्वरोदयाचार्य का कहा हुआ जय पराजय चक्र केवल नामोच्चारण मात्र से कह रहा हूँ । लग्न, अलग्न से, घोष, अघोष से, प्रवेश निर्गम काल से, जय पराजय का ज्ञान होता है । पवर्ग ( प फ ब भ म ) उकार के सहित और श ष स ह इनको लग्न कहते हैं, इनसे भिन्न सभी वर्णों को अलग्न कहते हैं । सभी वर्गों के तीसरे-चौथे पाँचवें वर्णों को और स्वरों का घोष संज्ञा है तथा सभी वर्गों के प्रथम द्वितीय वर्ण और शष इनकी अघोष संज्ञा है । नाक में श्वास के प्रवेश काल को प्रवेश काल और वायु के निकलने के समय को निर्गम काल कहते हैं । लग्न वर्ण का अक्षर यदि प्रश्नाक्षर हो अथवा लग्नवर्ण का उच्चारण प्रथमाक्षर में हो, अथवा घोष के किसी अक्षर का उच्चारण हो अथवा वायु के प्रवेशकाल में प्रश्न हो तो विजय होती है ॥ १-५ ॥

लम्पटाचार्योक्त जयपराजयचक्रम्

| लग्न | अलग्न | घोष | अघोष |
|---|---|---|---|
| प फ ब भ<br>म ड श<br>ष स ह | उकार रहित<br>अवर्ग, यवर्ग<br>रहित कवर्गादय | गघङ, जझञ,<br>डढण, दधन,<br>उमम उ ए ओ | शपकख,<br>चछटठ,<br>तथ, पफ, सह |

## अथ तोरणचक्रम्

नाडीचतुष्टयं चक्रे लिखित्वा तोरणाकृतिः ।
कृतिकादि न्यसेदृक्षानि प्रवेशे निर्गमे तथा ॥ १ ॥
स्तम्भमूले स्थितान्यष्टौ सिंहद्वारे तथाष्टकम् ।
मालायामष्टकं तत्र चतुर्विंशयानि तोरणे ॥ २ ॥
निर्गमे च यदा चन्द्रः प्रवेशे यदि भास्करः ।
तत्र काले शुभा यात्रा प्रवेशे विघ्नकारिका ॥ ३ ॥
चन्द्रः प्रवेशऋक्षस्थो निर्गमस्थो दिवाकरः ।
वधबन्धनदा यात्रा प्रवेशे तत्र शोभना ॥ ४ ॥
चन्द्रादित्यौ प्रवेशर्क्षे ह्यथवा निर्गमस्थितौ ।
मिश्रं फलं भवेत्तत्र प्रवेशे चाथ निर्गमे ॥ ५ ॥
प्रवेशर्क्षाह्नि कर्तव्या भूभृतां राजपट्टिका ।
क्रूरग्रहयुतश्चन्द्रः प्रवेशे चाथ निर्गमे ॥ ६ ॥
तद्दिने भूभुजा चैव निषिद्धा राजपट्टिका ।
शुभग्रहयुते चन्द्रे सिंहद्वारभसंस्थिते ।
प्रवेशः पट्टबन्धश्च भूभुजां शोभनः स्मृतः ॥ ७ ॥
स्तम्भे सौरिर्नृपं हन्ति सिंहे स्वपरविग्रहः ।
मालास्थिते चलं राज्यं तोरणे सर्वसिद्धयः ॥ ८ ॥

इति तोरणचक्रम्

दोनों तरफ चार रेखाओं से तोरण की आकृति का चक्र बनाकर उसमें कृत्तिका से चार चार नक्षत्र क्रम से प्रवेश और निर्गम सञ्ज्ञक मानकर २८ नक्षत्रों को रखे। स्तम्भ के मूल में ८ नक्षत्र और आठ नक्षत्र सिंहद्वार में, माला में ८ नक्षत्र और ४ नक्षत्र तोरण में स्थापित करे। यदि निर्गम के नक्षत्र में चन्द्रमा हो और प्रवेश के नक्षत्र में सूर्य हो तो यात्रा शुभद होती है। केवल प्रवेश नक्षत्र में दोनों हों तो विघ्न कारक यात्रा होती है। चन्द्रमा प्रवेश के नक्षत्र में हो और निर्गम के नक्षत्रों में सूर्य हो तो वध बधन दोनों यात्रा में होता है। यदि दोनों रविचन्द्र प्रवेश नक्षत्र में हों अथवा




निर्गम नक्षत्र में हों तो प्रवेश या निर्गम दोनों में मिश्रित फल होता है। प्रवेश नक्षत्र के दिन राजपट्टिका करना किन्तु चन्द्रमा क्रूरग्रह से युत हो तो पट्टिका नहीं करना। यदि चन्द्रमा शुभग्रह से युत हो और सिंहद्वारस्थ नक्षत्रों में हो तो प्रवेश, पट्टबंधन दोनों शुभद होता है। स्तम्भ में शनि हो तो राजा का नाश, सिंहद्वार में हो तो शत्रुओं का नाश होता है, माला में शनि हो तो राज्य चल होता है और तोरण में हो तो सभी प्रकार की सिद्धियाँ होती हैं॥ १—८॥

## अथ शशिसूर्यकालानलचक्रम्

द्वादशार लिखेच्चक्रं मेषादिद्वादशान्वितम्।
क्षेत्रयुग्मं च तत्रैव ज्ञेयं भास्करचन्द्रयोः॥ १॥
सिंहादि मकरान्तं च भानुक्षेत्रमुदाहृतम्।
कुम्भादिकर्कपर्यन्त चन्द्रक्षेत्र न संशयः॥ २॥
याम्योपरि स्थितं यत्तु भानुक्षेत्रमुदाहृतम्।
पूर्वोत्तरस्थित यत्तु चन्द्रक्षेत्रं विनिर्दिशेत्॥ ३॥
चन्द्रक्षेत्रगते सूर्ये चन्द्रे तत्रैव संस्थिते।
यायिनो विजयो युद्धे स्थायिनो भङ्गमादिशेत॥ ४॥
सूर्यक्षेत्रगते चन्द्रे सूर्ये तत्रैव संस्थिते।
यायी भङ्गं समायाति स्थायिनो विजयो भवेत्॥ ५॥

सूर्ये सूर्यांगसंयुक्ते चन्द्रे चन्द्राङ्गसंस्थिते ।
तदा काले भवेत्संधिर्युद्धं तस्य विपर्यये ॥ ६ ॥
व्यस्तगौ यदि चन्द्रार्कौ संहारः सैन्ययोर्द्वयोः ।
कर्त्तर्यां यदि चन्द्रार्कौ संहारः सैन्ययोर्द्वयोः ।
यात्रायां युद्धकाले च चक्रमेतद्विलोकयेत् ॥ ७ ॥

इति शशिसूर्यकालानलचक्रम्

बारह धार का एक चक्र लिखकर उस पर मेषादि १२ राशियों को लिखना चाहिये । उसमें सूर्य और चन्द्र के दो भाग हैं । सिंह से मकर तक सूर्य का क्षेत्र और




कुम्भ से कर्क पर्यन्त चन्द्रमा का क्षेत्र होता है । चन्द्रमा के क्षेत्र में सूर्य हो और उसी क्षेत्र में चन्द्र भी हो तो यायी राजा की युद्ध में विजय और स्थायी की हार होती है । सूर्य क्षेत्र में चन्द्रमा हो और सूर्य भी उसी में हो तो यायी राजा की हार और स्थायी की विजय होती है । सूर्य अपने राशि में और चन्द्रमा अपने क्षेत्र में हो तो आपस में संधि होती है इससे विपरीत हो तो युद्ध होता है । यदि सूर्य चन्द्र कर्त्तरी[1] में हों तो दोनों सेनाओं का नाश होता है । इस चक्र से यात्रा और युद्ध समय का विचार करना चाहिये ॥ १–७ ॥

## अथ सघट्टचक्रम्

अश्विन्यादि लिखेच्चक्रं सप्तविंशतितारकाः ।
त्रिकोणं नवभिर्वेधः कर्त्तव्यस्तिर्यगाकृतिः ॥ १ ॥
अश्विनीरेवतीवेधो वेधश्चाश्विनिज्येष्ठयोः ।
मघापौष्णये मघाश्लेषा आश्लेषामूलयोस्तथा ॥ २ ॥
एवं सङ्घट्टचक्रेऽस्मिन् कार्या ऋक्षगता ग्रहाः ।
भूपनामर्क्षसङ्घट्टे युद्धं भवति नान्यथा ॥ ३ ॥

---

१ कर्त्तरीयोगलक्षणम्—शनि भौमान्तरे सूर्यस्तदा स्यात्सूर्यकर्त्तरी । राहुसूर्यान्तरे चन्द्रस्तदा स्याच्चन्द्रकर्त्तरी ॥

यस्य भूपर्क्षसङ्घट्टे विद्धं भं यस्य भूपतेः।
तस्यापि भ यदा विद्धं तत्तयुद्धं समादिशेत् ॥ ४ ॥
अश्विन्यादिकसङ्घट्टे भावि युद्धं समादिशेत्।
यदा क्रुत्रेति सग्रामो वह्निभाद्ये प्रजायते ॥ ५ ॥
निर्वेधे सौम्यवेधे च युद्धं नास्ति नरेशयोः।
क्रूरवेधे भवेद्युद्ध तत्काले घोरदारुणम् ॥ ६ ॥
शनिभौमार्कपाताना शशिविद्धं तु यद्दिने।
तद्दिने जायते युद्धं तत्काले घोरदारुणम् ॥ ७ ॥
ग्रहवेधयुते पाते पातोपग्रहसंयुते।
घातपातसमायोगे सग्रामं दारुण भवेत् ॥ ८ ॥
युद्धकांक्षी भवेद्राजा यस्य क्रूरसमं भवेत्।
युद्धद्वेषी भवेत्सौम्यैस्तद्वद्द्वेपविवर्जितः ॥ ९ ॥
सौम्य क्रूरविभागेन मित्रामित्रक्रमेण च।
वक्रातिचारगत्या च युद्धमत्रास्ति नास्ति च ॥ १० ॥
आदित्यश्च यदा चन्द्र' एकरेखागतो यदि।
तद्दिने जायते युद्धं महाशस्त्रनिपीडनम् ॥ ११ ॥
कुजराह्वोर्यदा वेधश्चंद्ररेखाग्रसंस्थितः।
तद्दिने चाग्निपातश्च लोहपातो न संशयः ॥ १२ ॥
बुधशुक्रौ यदेकत्र तत्र चेत्सगतः शशी।
तदा वृष्टि विजानीयाद्विद्युत्पातं न संशयः ॥ १३ ॥
इन्द्वर्कशनिराहूणामेकनाडी यदा भवेत्।
तद्दिने दुर्दिनं ज्ञेयमभ्रच्छन्न न सशयः ॥ १४ ॥
राह्वर्ककुजसोमाश्च नाडीवेधगता यदि।
कलहं तत्र जानीयादित्युक्तं चादियामले ॥ १५ ॥

इति सङ्घट्टचक्रम्

नव त्रिकोण का तिरछे आकृति का एक चक्र बनाकर उसमें अश्विनी आदि



नक्षत्रों का न्यास करने से तिरछा वेध होता है। अश्विनी रेवती का वेध होता है और अश्विनी उत्तरा का वेध होता है। मघा रेवती का, मघा श्लेषा का और श्लेषा मूल का वेध होता है। इस प्रकार से नक्षत्र स्थापित कर नक्षत्रों पर ग्रहों को रखकर वेध का विचार करना चाहिये। राजा के नाम नक्षत्र पर सघट्ट चक्र में वेध होता हो तो युद्ध होता है। जिस राजा के नाम का नक्षत्र सघट्ट चक्र में वेधित हो और वही किसी अन्य राजा के नक्षत्र के साथ वेधित हो तो दोनों में युद्ध होता है। अश्विन्यादि सघट्ट चक्र से भावि युद्ध का विचार करना चाहिये। यदि यह प्रश्न हो कि कहाँ युद्ध होगा तो उसे कृत्तिकादि बनाकर विचार करना चाहिये। यदि वेध न होता हो अथवा शुभग्रह से वेध होता हो तो राजाओं से युद्ध नहीं होता है। क्रूरग्रह का वेध होता हो तो तत्काल भयंकर युद्ध होता है। जिस दिन चन्द्रमा शनि मंगल राहु से वेध करता हो उस दिन बड़ा घोर युद्ध होता है। ग्रहवेध युत राहु और पात तथा उपग्रह का योग हो तो युद्ध होता है। क्रूरग्रह के तुल्य नक्षत्र राजा का हो तो युद्ध होता है और शुभग्रह से युत नक्षत्र पर युद्ध नहीं होता है। शुभग्रह क्रूरग्रह के विभाग से तथा मित्र शत्रु के विभाग से तथा वक्र और अतिचार के क्रम से युद्ध का होना न होना निश्चित होता है। जिस दिन रवि चन्द्रमा एक रेखा पर होते हैं उस दिन शस्त्र द्वारा युद्ध होता है। चन्द्रस्थित रेखाग्र में मंगल और राहु का वेध होता हो तो उस दिन अग्निभय और शस्त्रभय होता है। बुध शुक्र एक ही नक्षत्र पर हों उस नक्षत्र पर जिस दिन चन्द्रमा योग करता है उस दिन वृष्टि और विद्युत् ( बिजली ) गिरती है। चन्द्रमा, सूर्य, शनि और राहु एक नक्षत्र पर जब होते हैं उस दिन बड़ा दुर्दिन होता है और आकाश मेघाच्छन्न रहता है। राहु सूर्य मंगल और चन्द्रमा का वेध होता हो तो उस दिन कलह होता है ऐसा आदियामल में कहा है ॥ १५ ॥

## अथ गूढकालानलचक्रम्

सप्तरेखा लिखेदूर्ध्वां सप्ततिर्यक् तदा लिखेत् ।
साभिजिच्चन्द्रभाद्यन्तं षडङ्गं कल्पयेत्ततः ॥ १ ॥

दिनर्क्षाद्गण्यते चक्र गूढं संपुटकर्तरि।
दंडं कपालं वज्रं च ज्ञातव्य स्वरवेदिभिः ॥ २ ॥
यस्मिन्नृक्षे स्थितश्चंद्रस्तत्रादौ त्रीणि गूढकम्।
संपुटे नव भान्यत्र कर्तरी च ततस्त्रिभिः ॥ ३ ॥
दंडे धिष्ण्यानि च त्रीणि कपाले ऋक्षसप्तकम्।
वज्रांगे त्रीणि धिष्ण्यानि षडङ्गस्येति निर्णयः ॥ ४ ॥
यदंगे नामनक्षत्रं योधकारस्य जायते।
वक्ष्ये शुभाशुभं चास्य गूढकालानले स्थितम् ॥ ५ ॥
गूढस्थे विभ्रमो युद्धे जयो भवति संपुटे।
कर्तर्यां सक्षतं युद्ध दंडे भंगो न संशयः ॥ ६ ॥
कपालस्थे भवेन्मृत्युर्वज्रे तस्य महद्भयम्।
गूढकालानल चक्रमुक्त वै चादियामले ॥ ७ ॥

इति गूढकालानलचक्रम्

सात रेखा सीधी और सात रेखा तिरछी लिखकर अभिजित् के सहित २८ नक्षत्रों को लिखे और उसी में ६ अंग कल्पना करे। दिन नक्षत्र से गिनकर गूढ, संपुट, कर्त्तरी, दंड, कपाल, वज्र इन ६ अंगों की कल्पना करे। जिस नक्षत्र पर चन्द्रमा हो उससे तीन नक्षत्रों की गूढ संज्ञा, इसके आगे ९ नक्षत्रों की संपुट संज्ञा, इसके आगे ३ नक्षत्रों की कर्त्तरी संज्ञा इसके आगे ३ नक्षत्रों की दंड संज्ञा इसके बाद ७ नक्षत्रों की कपाल संज्ञा और इसके आगे ३ नक्षत्रों की वज्र संज्ञा होती है ये ही ६ अंग हैं। योधा के नाम का नक्षत्र गूढ कालानल के जिस अंग में हो उससे फल को कहे। गूढ संज्ञक अंग में योधा के नाम का नक्षत्र हो तो युद्ध में भ्रम होता है और संपुट में हो तो विजय कर्त्तरी में हो तो घनयुद्ध, दंड में हो तो पराजय होता है। कपाल में हो तो मृत्यु और वज्रांग में हो तो बड़ा भय होता है। यह गूढ कालानल चक्र आदियामल में कहा हुआ है ॥ १-७ ॥



## अथ कुलाकुलचक्रम्

द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम् ।
विषमा अकुलाः सर्वाः शेषाश्च तिथयः कुलाः ॥ १ ॥
रविचन्द्रौ गुरुः सौरिश्चत्वारो ह्यकुला मताः ।
भौमशुक्रौ कुलाख्यौ च बुधवारः कुलाकुलः ॥ २ ॥
वारुणार्द्राभिजिन्मूल कुलाकुलमुदीरितम् ।
कुलानि समधिष्ण्यानि शेषभान्यकुलानि तु ॥ ३ ॥
तिथौ वारे च नक्षत्रे अकुले यायिनो जयः ।
कुलाख्ये स्थायिनो ज्ञेयः संधिश्चैव कुलाकुले ॥ ४ ॥

इति कुलाकुलचक्रम्

दोनों पक्ष की २ । ६ । १० ये तिथियां कुलाकुल संज्ञक हैं, विषम तिथियां १ । ३ । ५ । ७ । ९ । ११ । १५ अकुल संज्ञक और शेष ४।८।१०।१२ तिथियां कुल संज्ञक हैं । रवि, चन्द्र, गुरु और शनि ये वार अकुल संज्ञक हैं, भौम और शुक्र वार कुल संज्ञक और बुधवार कुलाकुल संज्ञक है । शतभिष, आर्द्रा, अभिजित् और मूल ये नक्षत्र कुलाकुल संज्ञक हैं । सम नक्षत्र भरणी, रोहिणी, पुष्य, मघा, उत्तरा फाल्गुनी, विशाखा, ज्येष्ठा, पूर्वाषाढ, श्रवण और उत्तरा भाद्रपद इनकी कुल संज्ञा है और शेष नक्षत्रों की अकुल संज्ञा है । अकुल संज्ञक तिथि वार और नक्षत्र में यायी ( चढ़ाई करने वाला ) यात्रा करे या युद्धारंभ करे तो उसकी विजय होती है । कुल संज्ञक तिथि वार नक्षत्र में स्थायी ( घर में बैठा हुआ ) युद्ध आरंभ करे तो उसकी विजय होती है और कुलाकुल में युद्धारंभ होने से दोनों में संधि हो जाती है ॥ १–४ ॥

| कुलाकुल | अकुल | कुल |
|---|---|---|
| २।१०<br>६ | १३, ५, ७,<br>९, ११, १५ | ४, ८<br>१२, १४ |
| बु | र च बृ<br>श | म शु |
| आर्द्रा<br>शत, मूल<br>अभि | अ कृ मृ<br>पुन, श्ले, पूफा<br>ह, स्वा, अ,<br>पूषा, ध, पूभा<br>रे, | भ रो पु<br>म उ फा<br>वि ज्ये<br>पू षा श्र<br>उभा |

## अथ कुम्भचक्रम्

कुम्भाकारं लिखेच्चक्रं तिर्यग्रेखासमन्वितम् ।
क्रमादूर्ध्वमधःस्थं च एकैकोत्तरमं लिखेत् ॥ १ ॥

भानुभाद्विन्यसेत्तत्र रिक्तं पूर्णमिति क्रमात् ।
एवं राशीन्क्रमान्न्यस्य रिक्तपूर्णं प्रकल्पयेत् ॥ २ ॥
रिक्ते रिक्ता भवेद्यात्रा पूर्णे यात्रा शुभावहा ॥ ३ ॥

इति कुम्भचक्रम्

तिरछी रेखा से युक्त कुम्भ का आकार बनाना उस पर ऊपर नीचे क्रम से एकोत्तर नक्षत्रों को लिखना। सूर्य के नक्षत्र रिक्त और दूसरा पूर्ण सज्ञक होता है। इसी प्रकार से १२ राशियोंको रिक्त और पूर्ण क्रम से ऊर्ध्वाधर स्थापित करना। रिक्त सज्ञक नक्षत्र में यात्रा रिक्त होती है और पूर्ण सज्ञक नक्षत्रों में यात्रा पूर्ण होती है ॥

अथ द्वितीय कुम्भचक्रम्

पूर्वेऽजसिंहचापश्च विन्यसेत्कलशे क्रमात् ।
वृषोऽथ मकरः कन्या दक्षिणे विनिवेशयेत् ॥ १ ॥
युग्मं कुम्भं तुला पश्चादुदक्कर्किझपालयः ।
चतुःखण्डं भवेदेतत्कलशानामथ क्रमात् ॥ २ ॥
रिक्तं पूर्णं क्रमाज्ज्ञेयं कुम्भस्य विषमे समे ।
रिक्ते तु मरणं विद्याज्जयः पूर्णे न संशयः ॥ ३ ॥
सौम्ययुक्ते तु कलशे ध्रुवं शत्रुक्षयो भवेत् ।
कुम्भाकारमिदं चक्रं कथितं चादियामले ॥ ४ ॥

इति द्वितीयकुम्भचक्रम्

पूर्वभाग में क्रम से मेष, सिंह, धन राशियों को और दक्षिण में वृष, कन्या, मकर को रखे। मिथुन, कुम्भ, तुला को पश्चिम में और उत्तर में कर्क, मीन और वृश्चिक को लिखने से कलश का चार खण्ड होता है। विषम और सम राशियों को क्रम से रिक्त और पूर्ण समझना। रिक्त राशियों में यात्रा करने से मृत्यु और पूर्ण में यात्रा करने से विजय होती है। शुभग्रह से युक्त राशि में यात्रा करने से अवश्य विजय होता है। यह कुम्भ चक्र आदियामल में कहा हुआ है ॥ ४ ॥



नहीं है तो आखेट सुन्दर होगा अन्यथा क्लेश, अनर्थ आदि होगा। यदि शुभ नक्षत्र पापग्रह से पीड़ित हो तो दोष होता है। चन्द्रमा और आखेटकर्ता के नक्षत्रों के मध्य में जितने पापग्रहों से युक्त नक्षत्र हों उतने संख्यक प्राणियों का वध मृगया में कहना। जितने शुभग्रह से युक्त नक्षत्र हैं उतने संख्यक प्राणियों का पलायन कहना। नक्षत्रों की जो जाति हो उससे जाति, आकृति, वर्ण, पापग्रहयोग से कहना अथवा राशि से कहना। नक्षत्र के चार चरण के अनुसार चन्द्रराशि और आखेटकर्ता के राशि के मध्य में जो राशियां पापग्रहाक्रान्त हों उसी आकृति के प्राणियों का वध होगा। यदि ग्रह अपने नवांश या त्रिंशांश में हो तो दूना। वक्र या उच्च राशि में हो तो तिगुना कहना। लग्न से ६ राशि के अन्दर पापग्रह हों तो पूर्वाह्न में घात और सप्तम से लग्न के मध्य में पापग्रह हों तो पश्चात् भाग में घात कहना ॥ १-१० ॥

छागौ तु कृत्तिकापुष्यौ सर्पभं रोहिणीमृगौ ।
आर्द्रामूले तथा श्वानौ मूषकौ पितृवासवौ ॥ ११ ॥
सर्पादिती च मार्जारौ व्याघ्रौ चित्राविशाखके ।
अर्यम तोयभे गावौ मैत्रे शक्रे तथा मृगौ ॥ १२ ॥
हस्तस्वाती च महिषौ तुरङ्गावश्विवारुणौ ।
मर्कटौ विष्णुविश्वाख्यौ याम्यपौष्णे मतङ्गजौ ॥ १३ ॥
भगाहिर्बुध्न्यभे सिंहौ विज्ञेयौ दैवचिन्तकैः ।
पूभाद्राभिजितौ बभ्रुमानां जातिरितीरिता ॥ १४ ॥
अथवा गणयेद्धीमान्वक्ष्यमाणक्रमेण तु ।
तस्मिन्नहनि यो वारस्तिथिर्या तद्दिने तु तत् ॥ १५ ॥
एकीकृत्य भवेद्यद्वै वर्गितं दलितं भजेत् ।
त्रिघनेन च शेषाकसंख्यप्राणिवधं दिशेत् ॥ १६ ॥
दले शेषे विजानीयाच्छुद्धादेकः पलायने ।
चक्रितैरपि निर्दिष्टं प्राणिनां ते पलायनम् ॥ १७ ॥
अथवापि तिथिवारं युक्तं कृत्वा तु वर्जितम् ।
दलितं चेष्टनाडीभिर्भक्तं शेषाङ्कसंख्यया ।
प्राणिनां वधमादेश्यमाकृतिं राशिलक्षणात् ॥ १८ ॥
स्वलग्नं जन्मभे चाज्यं शुद्धं चैव विपत्कभे ।
आद्यभेदाच्च निधने प्रत्यरौ पतनं दिशेत् ॥ १९ ॥

शेषे तु शोभनं वाच्यं फलं दैवविदा सदा।
खेचरं भूचरं प्रोक्तं नृपाणां मृगयार्थिनाम् ॥ २० ॥
इति नरपतिजयचर्यास्वरोदये खेचरभूचरचक्रम् ॥

छागी इति ॥ ११-२० ॥

नक्षत्रों से जीव का ज्ञान—कृत्तिका और पुष्य में छाग, रोहिणी मृगशिरा में सर्प, आर्द्रा मूल में कुत्ता, मघा धनिष्ठा में मूषक। श्लेषा पुनर्वसु में मार्जार ( बिलार ), चित्रा विशाखा में व्याघ्र, उत्तराफाल्गुनी पूर्वाषाढ में गौ, अनुराधा-ज्येष्ठा में मृग। हस्त स्वाती में महिष ( भैंसा ), अश्विनी शतभिष में घोड़ा, श्रवण उत्तराषाढ में बन्दर, भरणी-रेवती में हाथी। पूर्वाफाल्गुनी उत्तराभाद्रपद में सिंह, पूर्वाभाद्रपद अभिजित् में नकुल, ये नक्षत्रों की जाति कही गयी है। अथवा जिस दिन आखेट को जाना है उस दिन जो वार और तिथि है दोनों की संख्या को एकत्र कर उसमें एक घटाकर शेष का वर्ग कर आधा करके उसमें २७ से भाग देने से जो शेष बचे उसी के तुल्य जीवों का वध होता है। शेष को आधा करने से यदि एक हो तो युद्ध से भाग जाता है। यदि नक्षत्र पर पक्षीग्रह हो तो भी एक भाग जाता है। अथवा तिथि वार की संख्या को जोड़कर वर्ग कर दें, अथवा योगफल को ३ गुणाकर आधा करके इष्ट नाड़ी ( सूर्योदय से जितने घटी पर यात्रा करे उसे इष्ट नाड़ी कहते हैं ) से भाग देने से शेषांक संख्या तुल्य प्राणियों का वध कहना, प्राणियों की आकृति राशि नक्षत्र के अनुसार कहना। यात्रा समय जन्मतारा हो तो सवारी आदि से गिरना, विपत्तारा हो तो हाथ में कष्ट, निधन तारा हो तो किसी अङ्ग में कष्ट और प्रत्यरि तारा हो तो पतन होता है। शेष ताराओं में शुभफल होता है यह खेचर भूचर चक्र राजाओं के मृगया के लिये कहा है ॥ ११-२० ॥

## अथ पञ्चाङ्गम्।

अथ वक्ष्यामि पञ्चाङ्गं तात्कालिकमनुत्तमम्।
येन विज्ञातमात्रेण यातुर्यात्राफलं भवेत् ॥ १ ॥
वारादिकं च पञ्चाङ्गमुच्यते तत्र तच्छृणु।
वारस्तिथिश्च ऋक्षाणि योगश्च समुहूर्तकः ॥ २ ॥
वारादिकं हि पञ्चाङ्गं गतनाडीगुणाः क्रमात्।
अष्टौ सविंशतिर्वारे तिथौ त्रिंशच्च मे तथा ॥ ३ ॥
ऋक्षाणि योगे भान्येव मुहूर्ते तिथयो हताः।
गतनाडी हता षष्ट्या भक्ता युक्ते स्वसङ्ख्यया ॥ ४ ॥

अष्टाविंशत्तथा त्रिंशत्सप्तविंशत्तथा तिथिः।
षष्टिभागे फलं लब्ध स्वस्वसंख्यायुतं भवेत् ॥ ५ ॥
इष्टकालिकपञ्चाङ्गं वाराद्यैः शेषिते भवेत्।
सामान्येन प्रमाण स्यात्पञ्चाङ्गं यदि तत्र किम् ॥ ६ ॥
शुभाशुभानि तत्र स्युरेकस्मिन्नपि वासरे।
तस्मात्सूक्ष्ममिदं ज्ञेयमेकस्मिन्नपि वासरे ॥ ७ ॥
स्थलवत्सर्वकार्याणि विधेयान्यत्र सर्वदा।
वर्तमान तु पञ्चाङ्गं तत्कालघटिकादलैः ॥ ८ ॥
युक्तं तत्कालपञ्चाङ्गं तदग्रे प्रत्ययो भवेत् ॥ ९ ॥

इति श्रीनरपतिजयचर्यायां तात्कालिकतिथ्यादिपञ्चाङ्गचक्रं समाप्तम्।

अथेति। स्पष्टम् ॥ १-८ ॥

अब मैं उत्तम पचाग को कहता हूँ जिसके ज्ञान से यात्रा करनेवाले को यात्रा का फल होता है। वार, तिथि, नक्षत्र, योग और मुहूर्त को पचाग कहते हैं। गतनाडी (इष्टघटी) को वारादि के ध्रुवाकों से गुणकर ६० का भाग देवे लब्धि में अपनी अपनी सख्या को जोड़ दे तो इष्टकालिक पचांग हो जाता है। वार का ध्रुवा २८, तिथि का ३०, नक्षत्र और योग का २७, तिथि और मुहूर्त का १५ ध्रुवा है। वारादि में अपनी-अपनी सख्या से भाग देने से इष्टकालिक पचाग हो जाता है। एक ही दिन में यह शुभ अशुभ विचार करने के लिये यह उत्तम पचांग साधन है। इस पचाग से जैसे स्थूल पचाग से सभी कार्य करते हैं वे सभी कार्य इस सूक्ष्म पचांग से भी करना चाहिये। इसके आगे नामकरण की आवश्यकता तात्कालिक पचाङ्ग में होती है ॥ १-८ ॥

उदाहरण—जैसे शनिवार को इष्टघटी १० है इसको वार के ध्रुवांक २८ से गुणा किया तो २८० हुये इसमें ६० से भाग देने से लब्धि ४ और शेष ४० रहे। लब्धि में इष्टवार सख्या ७ जोड़ने से ११ हुये। सात से अधिक होने से ७ स भाग देने से शेष ४ बचा। इष्ट वार से गिनने से वर्तमान भौमवार हुआ जिसका भोग १० दण्ड के ऊपर ४० दण्ड तक रहेगा।

अथ नाडीचक्रम्।

आर्द्रादिकं लिखेच्चक्रं मृगान्तं च त्रिनाडिकम्।
भुजङ्गसदृशाकारं मध्ये मूलं प्रकीर्तितम् ॥ १ ॥
यद्दिने एकनाडीस्थाश्चन्द्रनामर्क्षभास्कराः।
तद्दिने वर्जयेत्तत्र विवादे विग्रहे रणे ॥ २ ॥

आर्द्रादिकमिति। स्पष्टम् ॥ १-२ ॥

आर्द्रा से मृगशिरा तक त्रिनाड़ी चक्र सर्पाकार लिखे मध्य में मूल नक्षत्र को लिखे। जिस दिन 'चन्द्रमा', का नक्षत्र, नाम का नक्षत्र और सूर्य का




नक्षत्र एक ही त्रिनाड़ी के नक्षत्र में हो उस दिन, विवाद, विग्रह और संग्राम न करे ॥ १-२ ॥

इति नाडीचक्रम् ।

अश्विन्यादि लिखेचक्रं सर्पाकारं त्रिनाडिकम् ।
तत्र वेधवशाज्ज्ञेयं विवाहादि शुभाशुभम् ॥ १ ॥
नाडीवेधेन नक्षत्राण्यश्विन्यार्द्रादिउत्तराः ।
हस्तेन्द्रमूलवारुण्याः पूर्वाभाद्रपदा तथा ॥ २ ॥
याम्यं सौम्यं गुरुर्योनिश्चित्रा मित्रजलाह्वये ।
धनिष्ठा चोत्तराभाद्रा मध्यनाडीव्यवस्थिता ॥ ३ ॥
कृत्तिका रोहिणी सार्पं मघा स्वातीविशाखिके ।
उषा च श्रवण पूषा पृष्ठनाडीव्यवस्थिता ॥ ४ ॥
अश्व्यादिनाडीवेधर्क्षं पष्ठे च द्विलयं क्रमात् ।
याम्यादि तुर्यतुर्यं च कृत्तिकादि द्विपष्ठकम् ॥ ५ ॥

अश्विन्यादि इति । सुगमम् ॥ १-५ ॥

अश्विनी से सर्पाकार त्रिनाड़ी चक्र को लिखकर उसमें विवाहादि शुभकार्यों में वेध के विचार से शुभ अशुभ का विचार करे। नाड़ी चक्र में अश्विनी, आर्द्रा, उत्तरा फाल्गुनी, हस्त, ज्येष्ठा, मूल, शतभिष, पूर्वाभाद्रपद, पुनर्वसु इनकी आदि नाड़ी है। भरणी, मृगशिरा, पुष्य, पूर्वाफाल्गुनी, चित्रा, अनुराधा, पूर्वाषाढ, धनिष्ठा, उत्तराभाद्रपद, इनकी मध्य नाड़ी है। कृत्तिका, रोहिणी, श्लेषा, मघा, स्वाती, विशाखा, उत्तराषाढ, श्रवण, रेवती इनकी अन्त्यनाड़ी है। अश्विनी के नक्षत्र से दूसरे नक्षत्र का, भरणी से ४थे नक्षत्र का, कृत्तिका से ६ठे और दूसरे का वेध होता है ॥ १-५ ।

अहिर्बुध्न्याजपादर्क्षं शतभं ब्राह्मसार्पभम् ।
पुष्यं हस्तं समालेख्यं द्वितीयां पङ्क्तिमास्थितम् ॥ ५ ॥
विधिविष्णुर्धनिष्ठाख्यं सौम्यरौद्रपुनर्वसू ।
चित्राभं च तृतीयायां पङ्क्तौ धिष्ण्यस्य सप्तकम् ॥ ६ ॥
विश्वर्क्षं तोयभं मूलं ज्येष्ठा मैत्रविशाखिके ।
स्वाती पङ्क्त्यां चतुर्थ्यां च कृत्वा चक्रं विलोकयेत् ॥ ७ ॥
एवं प्रजायते चक्रे प्रस्तारः पन्नगाकृतिः ।
द्वारशाखे मघायास्ये द्वारस्था कृत्तिका मता ॥ ८ ॥
अश्वीशपूर्वाषाढादित्रिकं पञ्च चतुष्टयम् ।
रेवती पूर्वाभाद्रेदोर्भानि शेषाणि भास्वतः ॥ ९ ॥
उदयादिगता नाड्यो भग्नाः षष्ट्यासशेषके ।
दिनेन्दुभुक्तियुक्तोऽसौ भवेत्तत्कालचन्द्रमाः ॥ १० ॥

अहिचक्रमिति । तदहिचक्रम् प्रवक्ष्यामि सर्वज्ञभाषित यथा तथेति । येन चक्रेण द्रव्य शल्य तथा शू य साधका जानन्ति । निधिरिति । निवर्त्तनेकस्थो निधिर्यत्र सम्भ्रान्तो सम्भ्रमो विषय । तथात्र इद चक्र स्थाप्यम् । सप्तहस्तेन दण्डेन त्रिशद्दण्डो निवर्त्तनमिति स्मरणात् । कीदृश स्थान द्वारमुखस्थित-स्थानस्य गृहादेर्यद्द्वार तन्मुखेन स्थित, प्रश्ने सति चैत्रादौ द्वाराज्ञाते एव प्रजायते । चक्रे प्रस्तार पन्नगाकृतिरित्युपसंहारवचनादर्थतो भाद्रादित्रिमासेन पूर्वादिचतुर्दिक्षु शिर कल्पनादसौ शेते तेन तन्नुमानेन प्रश्ने सति तस्या तस्या दिशि अहिचक्रमुख कृत्तिकादिनक्षत्रव्यवस्थित कृत्वा व्यवहरणीयमित्युपदेश इति नरहरि । लक्ष्मीधरस्तु—तात्कालिकर्क्षं सगुण्य पष्ट्या सविभजेत् सुधी । बाणवेदैश्च शिष्टाके भास्करादीन् विशोधयेत् । अशुद्धाङ्केन पूर्वादिकाष्ठा सूरगजद्विका । भास्करा १२ शुभ बाणा ५ । ५ सु ५ मार्गेशे ५ युगद्वय ४ । ४ इति । ऊर्ध्वेति—ऊर्ध्वं रेखाष्टकमूर्ध्वक्रमेण रेखाष्टक लेख्यम् । तथैव पञ्चरेखास्तिर्यक् क्रमेण लिखेत् । एवमहिचक्रमष्टाविंशतिकोष्ठक भवेत् । तत्रेति—तत्र कोष्ठकेषु पौष्णरेवती । अश्विनी । याम्यर्क्षभरणी । कृत्तिका । मघा । भाग्यपूर्वाफाल्गुनी चेति सप्तनक्षत्राणि पूर्वपङ्क्त्या प्रथमपङ्क्त्या लेखनीयानि । अहिर्बुध्न्येति-अहिर्बुध्न्यमुत्तराभाद्रपदा । अजपादर्क्षंपूर्वाभाद्रपदा शतभ शतभिषक् । ब्राह्मरोहिणी । सार्पभमश्लेषा । पुष्यो । हस्त । स्वाती नक्षत्रसप्तक द्वितीयपङ्क्तिस्थ

लेख्यम्। त्रिधिरिति–विष्णुश्रवण धनिष्ठासौम्यम् मृगशिर त्रिधिरभिजित्। विष्णु श्रवण धनिष्ठा सौम्य मृगशिर। रौद्रमार्द्रा। पुनर्वसुचित्रा चेति नक्षत्र-सप्तक तृतीयपङ्क्तौ समालेख्यम्। विश्वर्क्षमिति।—विश्वर्क्षमुत्तराषाढतोयभ पूर्वाषाढा। जेष्ठा। अनुराधा। विशाखा। स्वाती चेति नक्षत्रसप्तक चतुर्थपङ्क्तिमा-स्थितम् कृत्वा चक्र विलोकयेत्। चिन्तयेदित्यर्थं। एवमिति—एवमनेक-प्रकारेण चित्राग्निनक्षत्रात्त क्रमस्थित्या पन्नगाकृति सर्पाकृति प्रस्तारो भवति। प्रजायतेत्यर्थ, द्वारशाखेति—मघायाम्ये मघाभरणी द्वारशाखे द्वारोभयपार्श्व-स्थिते ज्ञातव्ये। कृत्तिका द्वारस्था मता। कृत्तिकाद्वारमुख। अश्वीशेति ईश आर्द्रा। पूर्वाषाढा एतानि त्रिनक्षत्राणि आदिभूतानि, अनुक्रमेण त्रिकपञ्चचतुष्टय नक्षत्रम्। यथा। अश्वनीभरणीकृत्तिका त्रीणि अर्द्रापुनर्वसु पुष्याश्लेपा मघा चेति पञ्चपूर्वाषाढोत्तराषाढाभिजित् श्रवणेति चत्वारि नक्षत्राणि तेथाश्वनीभरणीकृत्ति-कार्द्रापुनर्वसुपुष्यश्लेपामघापूर्वाषाडोत्तराषाडभिजित्। श्रवणरेवतीपूर्वभाद्रपदा। एतानि नक्षत्राणि इन्दोश्चन्द्रस्य शेषाणि भानि भास्वत सूर्यस्य ज्ञातव्यानि। उम्यादिति—उदयेत्यत्रोदयशब्देन सूर्योदयो गृह्यते। तेन यदा प्रश्नो भवति तदोदयगता नाड्यस्ता सप्तविंशत्या गुणिता पश्चात् षष्ट्या भाजिता यदाप्त तानि नक्षत्राणि शेषाशा ततश्चन्द्रेण यानि नक्षत्राणि भुक्तानि येंशा भुक्ता स्तानि पूर्वगतनभत्रेषु तेषु तेन पूर्वगताशेषु मेलनीया स्वनक्षत्रे सूर्यनक्षत्रे यास्तीति ॥ १–१० ॥

सर्पनों से कहे हुये अहिचक्र को कह रहा हूं। जिससे साधक यह जानते हैं कि द्रव्य, हड्डी, तथा शून्य इनमें से क्या पदार्थ इस भूमि में है ॥१॥ जिस नियमन भूमि में रक्खी हुई द्रव्य भूल गई है वहा पर इस चक्र को स्थान के द्वार पर मुख करके स्थापित करे ॥२॥ आठ रेखा खड़ी और ५ पांच रेखा तिरछी लिखने से २८ कोष्ठ का यह अहिचक्र हो




जाता है। इसमें प्रथम पंक्ति में रेवती, अश्विनी भरणी, कृत्तिका, मघा, पूर्वाफाल्गुनी, उत्तराफाल्गुनी इन सात नक्षत्रों को स्थापित करे। दूसरे पंक्ति में उत्तराभाद्रपद,

पूर्वाभाद्रपद, शतभिष, रोहिणी, श्लेषा, पुष्य, हस्त को लिखना। तीसरे पंक्ति में अभिजित्, श्रवण, धनिष्ठा, मृगशिरा, आर्द्रा, पुनर्वसु, चित्रा, इन सात नक्षत्रों को लिखना। चौथे पंक्ति में उत्तराषाढ़, पूर्वाषाढ़, मूल, ज्येष्ठा, अनुराधा, विशाखा, स्वाती इनको लिखना चाहिये। इस प्रकार से नक्षत्रों की स्थापना करने से सर्प की आकृति का चक्र होता है जिसमें द्वार की शाखा (बाजू) में मघा और भरणी तथा द्वार में कृत्तिका नक्षत्र रहता है। अश्विनी, आर्द्रा, पूर्वाषाढ़ से क्रम से तीन, पांच और चार नक्षत्र अर्थात् अश्विनी, भरणी, कृत्तिका आर्द्रा, पुनर्वसु, पुष्य, श्लेषा, मघा, पूर्वाषाढ़, उत्तराषाढ़, अभिजित्, श्रवण रेवती और पूर्वाभाद्रपद ये १४ नक्षत्र चन्द्रमा के हैं और शेष १४ नक्षत्र सूर्य के हैं। उदय से चन्द्र के भुक्त घटी को २७ से गुणा कर ६० से भाग देने से लब्धि में चन्द्र के भुक्तनक्षत्र की संख्या को जोड़ देने से तात्कालिक चन्द्रमा का नक्षत्र होता है ॥ १-१० ॥

चन्द्रवत्साधयेत्सूर्यमृक्षस्थं चेष्टकालिकम्।
पश्चाद्विलोकयेत्तौ च स्वर्क्षे वा चान्यभे स्थितौ ॥ ११ ॥
चन्द्रऋक्षे यदार्केन्दू तत्रास्ति निश्चितं निधिः।
भानुऋक्षे स्थितौ तौ चेत्तदा शल्यं च नान्यथा ॥ १२ ॥
स्वस्वभे द्वितयं ज्ञेयं नास्ति किञ्चिद्विपर्यये।
नवांशकानुमानेन भूमानं तस्य कल्पयेत्।
स्थितं न लभते द्रव्यं चन्द्रे क्रूरग्रहान्विते ॥ १४ ॥
पुष्टे चन्द्रे भवेन्मुद्रा क्षीणे चन्द्रेऽल्पको निधिः।
ग्रहदृष्टिवशात्सोपि विज्ञेयो नवधा बुधैः ॥ १५ ॥
हेम तारं च ताम्रार रत्नं कांस्यायसं त्रपु।
नागं चन्द्रे विजानीयाद्भास्करादिग्रहेक्षिते ॥ १६ ॥
मिश्रैर्मिश्रं भवेद् द्रव्यं शून्यं दृष्टिविपर्यये।
सर्वग्रहेक्षिते चन्द्रे निर्दिष्टोसौ महानिधिः ॥ १७ ॥
शुभक्षेत्रगते चन्द्रे लाभः स्यान्नात्र संशयः।
पापक्षेत्रे न लाभो हि विज्ञेयः स्वरपारगैः ॥ १८ ॥
हेम तारं च ताम्रं च पाषाणं मृन्मयायसम्।
सूर्यादिगृहगे चन्द्रे द्रव्यभाण्डं प्रजायते ॥ १९ ॥

१ पश्चिमं तं निशानाथ शरवेदाक्षरं पुनः। युगं शेष भवेद्यस्तभागादि[illegible] ॥

भुक्तराश्यंशमानेन भूमानं क्रामिकैः करैः ।
नीचे द्विघ्नं परं नीचे जलस्थोऽसौ भवेन्निधिः ॥ २० ॥

स्वोच्चस्थे भूर्ध्वगं द्रव्यं नवांशकक्रमेण च ।
परमोच्चे परे तुङ्गे भित्तिस्थमृक्षसंक्रमे ॥ २१ ॥

चन्द्रवदिति—ऋक्षस्य नक्षत्रस्य चेष्टनाडीक स प्रश्नसमये इष्टदण्डक कृत्वा एव द्वित्रिभिन्न षष्टिदण्डात्मक नक्षत्रस्य प्रश्नकाले सूर्येण यावन्तो दण्डा भुक्तास्तान् दण्डान् सप्तविंशत्या सगुण्य षष्टिहरणाल्लब्ध शेष भवति । लब्धाश्च सूर्यभुक्ताश्विन्यादिनक्षत्रसख्या संयोज्य सप्तविंशत्यधिके सप्तविंशतिभक्तस्यावशिष्ट भुक्तनक्षत्रसख्या अश्विनीतो भवति षष्टिहरणशेषभुज्यमाननक्षत्रशरीर तन्नक्षत्रस्थ तात्कालिक सूर्यो लेखनीय । पश्चात् स्वनक्षत्रचन्द्रनक्षत्रयोरवस्थितिश्चिन्तनीया । नक्षत्रे सूर्यभुक्ते दण्डे सूर्यभुक्तचतुर्दशदिने सकालनक्षत्रभोग प्रत्यह सप्तदशपलाधिकाश्चत्वारो दण्डा भवन्ति । न्यूनभोगेन कानिचिद्विपलानि ह्रसन्ति । तेन नक्षत्रभोगप्रवृत्तिसमयादारभ्य प्रश्नसमयेन यावन्तो दण्डास्ते प्रतिषष्टि चत्वारो दण्डा सप्तदशपलानि षष्टिन्यूने तदनुमानेन न्यूनतासूक्ष्मकालस्य सूर्यमण्डलादिमहनक्षत्रतात्कालिकीकरणे नक्षत्रे इष्टदण्डानयनपूर्वक पितामहश्लोको लिख्यते । ऋक्षप्रवेशाद्गिष्ट ता नाड्य षष्ट्याभिस्ताडिता । ऋक्षप्रवेशादागत्य घटिकाभिर्विभाजिता । लब्ध दण्डादिक यस्तद्भुक्त षष्टिभिर्हृतम् । अश्विन्यादीनभुक्तेन युक्तस्तात्कालिको रवि । व्याख्यानमेतयोस्तात्कालिकराहुकालानलचक्रे कृतमन्वेषणीयमिति । पश्चात् तात्कालिकीकरणानन्तर भौ सूर्यचन्द्रमसौ स्वऋक्षे स्वनक्षत्रे परभे परनक्षत्रे वा व्यवस्थितौ विलोकयेत् । इति तत्परि । चन्द्र इति—चन्द्रनक्षत्रेऽश्विन्या इत्यादि कथित अर्केन्दुतात्कालिकौ स्तस्तदा निधिनियत निश्चिनमस्ति । विरोधादिति—चेद्यदि भानुनक्षत्रे सूर्यनक्षत्रे तौ सूर्यचन्द्रमसौ स्थितौ तदा शून्य भवति अन्यथा नेदमित्यर्थः । स्वस्वभ इति—चन्द्रे रवौ च स्वस्वनक्षत्रे स्थिते द्वितय निधिशल्य चन्द्रस्थाने निधि सूर्यस्थाने शून्य तत्र शशाङ्के चन्द्रमसि द्रव्य भवति सूर्यभे शून्य भवति नास्ति किंचित् विपर्ययम् । चन्द्रभे सूर्यभे चन्द्रे निधि शून्य च नास्ति स्थितमिति—क्रूरप्रशान्विते तात्कालिकचन्द्रे स्थित द्रव्य न लभ्यते । परिशेषाच्च शुभसद्योगाल्लभ्यते इति । एव चन्द्रस्थितौ किं द्रव्यमित्याकाङ्क्षायामाह । हेमेति सूर्यादिग्रहनिरीक्षिते तात्कालिकचन्द्रे हेमादि द्रव्य जानीयात्, यथा सूर्यनिरीक्षिते हेम सुवर्णम् । न्यूनचन्द्रेक्षिते तार रजतम् । कुजेक्षिते ताम्रम् । बुधेक्षिते आर पित्तलम् । जीवेक्षिते पाषाणम् । शुक्रेक्षिते मृतम एव राहुकेतौ त्रपुनाग विजानीयात् इति । सिद्धैरिति—

मिश्रैर्नानामहैर्दृष्टिविवर्जित चन्द्रे शून्ये न किमपि भवतीत्यर्थः । सर्वग्रहेक्षिते चन्द्रे असौ महानिधिर्निर्देश्य । पुष्ट इति–चन्द्रपुष्टे पुष्टश्चन्द्र शुक्लपक्षैकादशीत कृष्णपक्षपञ्चमीपर्य्यन्त भवति भाण्डस्थमुद्राद्रव्य भवति । क्षीणचन्द्रे भवत्येव स्वल्पनिधि क्षीणचन्द्र कृष्णैकादशीत शुक्लपञ्चमीं यावदिति, उभयपक्षषष्ठीतो दशमीपर्य्यन्त मध्यबलत्वात्तेन तादृशे चन्द्रे मध्यत्व द्रव्यस्येत । सोऽपि निधि सूर्य्यादीना नवाना दृष्टिवशान्नवधा नवप्रकारेण बुधैर्ज्ञेय । स च यथा भवति तथा पूर्वश्लोकद्वयेन कथित एव । द्रव्याधारमाह हेमेति–चन्द्रे सूर्यादिगृहे स्थिते सूर्यादिदिशि स्थिते द्रव्याधारभाण्डमाधारभाजन प्रजायते । यथा सूर्यगृहे सिंहे हेम चन्द्रगृहे कर्कटे रजतम्, कुजगृहे मेषे, वृश्चिके वा ताम्रम्, बुधगृहे कन्याया मिथुने वा तार पित्तलम्, गुरुगृहे धनुषि मीने वा पाषाणम्, शुक्रगृहे तुलाया वृषे वा मृन्मयम्, शनिगृहे मकरे कुम्भे वा आयस लौहम्, राहुगृहे कन्याया तत्र बुधदृष्टिविहीने त्रपु रग । एव कन्याया सप्तम गृह मीन-केतुगृहे मीने जीवावलोकिते शीशक इति । शुभक्षेत्रेति–चन्द्रगुरुबुधशुक्राणां गृहगते चन्द्रे लाभो नि सशय एव । एव पापगृहे पापक्षेत्रे गते पापराशिगते चन्द्रे न लाभो भवतीति स्वरवेदिभिर्ज्ञातव्यम् । भुक्तराश्यशमाने तात्कालिक चन्द्रेण यावन्तो राश्यशा भुक्तास्तन्मानेन तत्सख्याया कामिकैर्वसुमुष्टिभि करैर्हस्तैर्भूमान धृतद्रव्यगर्तभूमानम् । नीचे द्विघ्नम्, द्विगुणित, पर नीचे वृश्चिकस्तृतीयांशे चन्द्रेऽसौ निधिर्जलस्थो द्रष्टव्य । तावत् खात भवतीति यावत् जलस्थ द्रव्य भवतीति श्लोकस्य इति—तु पुनरुच्चस्थिते वृषराशिस्थिते चन्द्रे तदशकक्रमेण यावन्तो नवाशका भुक्तास्तावद्धस्तै पूर्ववद्द्रव्यगर्त बाहूर्ध्वेन प्रथम हस्तात्परम् परमोच्चे वृषतृतीयांशे चन्द्रे स्थिते परे तुग । अत्युच्चप्रदेशे द्रव्यमस्तीति । ऋक्षसक्रमे तात्कालिकनक्षत्रशेषपलगते चन्द्रे भित्तिस्थ द्रव्य भवति ॥ ११–२१ ॥

चन्द्रमा के ही भांति तत्कालिक सूर्य के नक्षत्र का भी साधन करे। पीछे यह देखना चाहिये कि दोनों अपने नक्षत्र में हैं अथवा दूसरे के नक्षत्र में यदि चन्द्रमा के नक्षत्र में सूर्य और चन्द्र दोनों हों तो उस स्थान में निश्चय ही द्रव्य है। सूर्य के नक्षत्र में दोनों हों तो हड्डी है और कोई पदार्थ नहीं है। यदि दोनों अपने २ नक्षत्र में हों तो दोनों पदार्थ हैं इससे विपरीत हो तो कुछ नहीं है। नवांश के अनुमान से भूमि का अनुमान करना चाहिये। यदि चन्द्रमा क्रूरग्रह से युक्त हो तो द्रव्य नहीं मिलता है। पूर्णचन्द्रमा हो तो पूर्ण द्रव्य, क्षीण चन्द्र हो तो अल्पद्रव्य होता है। ग्रह दृष्टि के अनुसार द्रव्य नव प्रकार का होता है। सूर्यादि ग्रहों का क्रम से सुवर्ण, चांदी, तामा, पित्तल, रत्न कांसा, लोहा, शीशा और नाग ये ९ प्रकार के द्रव्य हैं चन्द्रमा को जो ग्रह देखता हो उसके द्रव्य को कहना। मिश्रग्रह देखते हों तो मिश्रित

द्रव्य कहना। दृष्टि विपर्यय हो तो शून्य कहना। सभी ग्रहों से चन्द्रमा १८ हो तो निश्चय ही यहाँ निधि है। चन्द्रमा शुभग्रह की राशि म हो तो द्रव्य का अवश्य लाभ होता है। पापग्रह की राशि म हो तो लाभ नहीं होता है। सूर्यादि ग्रहों की राशि म चन्द्रमा हो तो क्रम से सोना, चादी, तामा, पत्थर, मिट्टी और लोहे के बर्तन में द्रव्य कहना। चन्द्रमा के युक्त राशि अश के मान से भूमि का मान कार्यकर्त्ता के हाथ से, नीच राशि म चन्द्रमा हो तो दूने हाथ और परमनीच में हो तो जल में द्रव्य हे। अपने उच्चराशि में हो तो ऊपर और परम उच्च म हो तो दीवार में उच्च स्थान म द्रव्य होता है। ॥ ११-२१ ॥

चन्द्रांशभुक्तमानेन द्रव्यसख्या विधीयते।
तस्या दशगुणा वृद्धिः षड्वर्गेंद्वयलक्रमात्॥ २२॥
अधिष्ठितं भवेद्द्रव्यं यत्र चन्द्रो ग्रहान्वितः।
तदधिष्ठापको ज्ञेयो भास्करादिग्रहैः क्रमात्॥ २३॥
ग्रहो मुग्वे ग्रहश्चैव क्षेत्रपालं च मातृकाः।
दीपेशं भीषण रुद्रं यक्षं नागं विदुः क्रमात्॥ २४॥
ग्रहे होमः प्रकर्तव्यो मुग्धे नारायणीबलि'।
क्षेत्रपाले सुरामांसं मातृकाया महाबलिः॥ २५॥
दीपेशे दीपजा पूजा भीषणे भीषणार्चनम्।
रुद्रे च रुद्रजो जाप्यो यक्षे यक्षादिशान्तयः॥ २६॥
नागे नागग्रहाः पूज्या गणनाथेन सयुताः।
लक्ष्मीधरादितत्त्वानि सर्वकार्येषु पूजयेत्॥ २७॥
एवं कृते विधानेति निधिःसाध्योपि सिध्यति।
निधिप्राप्ता नरा लोके वन्दनीया न संशयः॥ २८॥

चन्द्रभुक्तांशेति—चन्द्रांशभुक्तमानेन तात्कालिकचन्द्रराशेर्या यावन्तोऽशा भुक्तास्तन्मानेन सख्या विधीयते प्रत्येकभुक्तांशेदशमख्या षड्वर्गे होराद्रेष्काण नवांश द्वादशांश त्रिंशांशेषु बलक्रमाद्दशगुणा वृद्धि'। यदि स्वकीय षड्वर्ग भागे तिष्ठति तदंशानुमिते द्रव्य दशगुण भवति। अधिष्ठितमिति—यत्र प्रश्ने चन्द्रो ग्रहान्वितो भवति तत्र द्रव्यमधिष्ठित भवति। वक्तव्यम्। भास्करादि-ग्रहै प्रत्येकसहिते क्रमात्तदधिष्ठापको द्रव्याधिष्ठापको द्रव्याधिष्ठाता ज्ञेय। यथा चन्द्रे सूर्यान्विते ग्रह (मुग्धग्रह) कुजसहिते क्षेत्रपाल बुधसहिते मातृका। गुरुसहिते दीपेश। शुक्रसहिते भीषण। शनिसहिते रुद्र'।

राहुसहिते यक्ष । केतुसहिते नाग इति क्रमात्। ग्रह इति—ग्रहेऽधिष्ठितरि होमो ग्रहस्यैव कर्त्तव्यस्तयथा मुग्धे मुग्धे ग्रहे नारायणी नारायण समुरवव लित । पूजोपहारादि , क्षेत्रपालेऽधिष्ठातरि तस्मै सुरामास च देयमिति । मात्रिकायामधिष्ठाऽस्या महाबलिर्मानुपबलिर्देय । तदसम्भवे छागादि योग्यविरुद्ध बलित्वेनोपकल्प्यम् । दीपेशेऽधिष्ठातरि दीपप्रधानपूजा दीपजा पूजा भीपखे भीपणार्चन भयजनकमर्चन लोहितपुष्पाद्भिकृतम् । रुद्रेऽधिष्ठातरि रुद्रजमत्रस्य जप जपो रुद्राध्याय , यक्षेऽधिष्ठातरि यक्षादिपूजनम् । नागेति–नागेऽधिष्ठातरि नागग्रहा पूज्या । गणनाथेन गणेशेन सयुत । प्रतिशान्तिके गणेशपूजा लक्ष्मीधरादितत्त्वानि पचविंशतिसख्यकानि सर्वकार्येषु पूजयेत । अथ पद्यत्रयेण निधिस्थानद्वारज्ञान टीकाकारोक्त लिख्यते । अहिबलचक्रमिदम् । अहि शेषनाग सतु मात्रायैस्त्रिभिस्त्रिभिर्मासै पूर्वादि शिर कृत्वा वामपार्श्वेण शेते तेन यत्र तस्य शिर । तत्र निधिस्थानस्य द्वार तेन तन्मासेषु प्रश्ने सति तस्या तस्या दिशि अहिचक्रमुख कृत्तिकानक्षत्र व्यवस्थितम् । कृत्वा व्यवहरणीयम् इत्युपदेश । अथान्यपक्ष । चन्द्राधिष्ठित तत्कालनक्षत्रे यद्दिग्द्वारभ भवति । कृत्तिकादि सप्तसप्तव्यवस्थितात्तद्दिग्द्वार निधिस्थानस्य अथवा प्रश्नकर्त्ता निधिनाथो यत्र दिशि तत्र स्थाने प्रविशति तद्द्वार निधिस्थानस्य । इत्येव पद्यत्रयादपि कृत निधि साधयेत् । पद्मासने चन्द्रातपेन ॐ ऐं ह्रीं क्लीं ह्रू वद वद वाग्वादिनि स्वाहा । इति मन्त्र त्रिसध्य षण्मासपर्यन्त जपेत् । निधिप्राप्तिर्भवति । एवमिति एव विधानेन यथाविधानक्रमेण एव कृते पूजाहोमादौ त्वसाध्यो निधि साध्यते । एवनिरूपकस्य निधिप्रयोजनमाह । एव प्रकारेण नरो मनुष्यो निधिप्राप्त वन्दनीयो नमस्करणीय स्तुत्यो भवत्यत्र सशयो न निश्चय एवेत्यर्थ ॥ २२–२८ ॥

इति स्वरोदयविवृतौ अहिचक्रविवरणम् ।

चन्द्रमा के युक्त अश के मुख्य द्रव्य की सख्या कहना । षड्वर्ग से च द्रमा बलवान् हो तो अश सख्या से दशगुनी वृद्धि होती है । चन्द्रमा जिस राशि में हो वहीं द्रव्य होता है उसके स्वामी सूर्यादि होते हैं । ग्रह उपग्रह ( पातादि ), क्षेत्रपाल, मातृका, दीपेश, भैरव, रुद्र, यक्ष, नाग क्रम से अधिपति होते हैं। ग्रह हों तो हवन, उपग्रह ( पात ) हों तो नारायण बलि, क्षेत्रपाल हों तो शराब और मांस मातृका हों तो नरबलि। दीपेश हों तो दीप की पूजा, भैरव हों तो भैरव की पूजा, रुद्र हों तो रुद्र का जप, यक्ष हों तो यक्ष की पूजा, नाग हों तो नाग की पूजा करनी चाहिये किन्तु सबके साथ गणेश का भी पूजन होना आवश्यक है । लक्ष्मीधरादि तत्त्वों का पूजन सभी कार्यों म करना चाहिये । ऐसा विधान करने से अगाध्य

निधि भी साध्य हो जाती है निधि को पाकर मनुष्य लोक में वदनीय हो जाता है ॥ २२–२८ ॥

उदाहरण—जैसे सवत् २०१७ वैशाख कृष्ण ८ भौमवार इष्टघटी १०।५० पर को किसी ने प्रश्न किया कि मेरे घर में द्रव्य है या नहीं यह विचारिये । प्रश्न समय श्रवण नक्षत्र का भयात ११।५१ है इसको २७ से गुणने से गुणन फल ३१९।५७ हुआ । इसमें ६० का भाग देने से लब्धि ५ और शेष १९।५७ हुआ । लब्धि में चन्द्रमा के गत नक्षत्र की सख्या २१ जोड़ दिया तो तात्कालिक चन्द्र नक्षत्र २६ हुआ ।

सूर्य साधन का उदाहरण—वैशाख कृष्ण २ बुधवार को १०।५४ पर अश्विनी में सूर्य हुये । इसे ६० म घटाने से शेष ४९।६ यह अश्विनी का भोग्य हुआ । और वैशाख शुक्ल १ भौमवार को ५२।९ पर भरणी में सूर्य होंगे । दोनों का योग करने से १।११।१५ इसमें दोनों के मध्य के दिन १२ जोड़ देने से १३।११।१५ यह सपूर्ण अश्विनी का भोग्य दिन हुआ । इसमें ६० से भाग देने से एक दिन का भोग दिनादि ०।१३।४१।१५ हुआ । अश्विनी का भोग्य घटी ४९।६ इसमें इष्टघटी को जोड़ देने से ५९।५६ हुये इसमें इष्टदिन पर्यन्त दिन सख्या ५ को जोड़ देने से ५।५९।५६ यह इष्टकाल तक सूर्य का अश्विनी नक्षत्र का भुक्त दिनादि हुआ । इसको सवर्णन करने से १२९५७६० हुआ इसम एक दिन के भोग से सवर्णन करके ४९२७५ से भाग देने से २६।२ प्राप्त हुआ यही सूर्य का उदयादिगत घटिका हुई । इसको २७ से गुणा किया तो ७०२।१४ हुआ । इसमें ६० से भाग देने से ११ लब्धि और शेष ४२।५४ हुए । लब्धि में सूर्य के भुक्त नक्षत्र सख्या ० जोड़ देने से ११ हुए यहा सूर्य का नक्षत्र अर्थात् उत्तराफाल्गुनी में सूर्य हुआ ।

पद्मासने चन्द्रातपेन ऐं क्लीं ह्रूँ वदवद वाग्वादिनि स्वाहा
इति ब्रह्मयामलीयस्वरोदये अहिबलचक्रं समाप्तम् ।

पद्मासन से रात में बैठकर ऐं क्लीं ह्रूँ वदवद वाग्वादिनी स्वाहा इस मन्त्र को ६ मास तक तीनों सध्याओं ( प्रात मध्याह्न और साय ) में जप करने से निधि का लाभ होता है ॥ २९ ॥

इति स्वरोदये अहिबलचक्रम् ।

## अथ लाङ्गलचक्रम्

लाङ्गलं दण्डिका यूकं योक्त्रद्वयसमन्वितम् ।
दण्डकादि लिखेद्धानि दिनेशाक्रान्तभादितः ॥ १ ॥

दण्डिकाहलयूकानां द्विद्विस्थाने त्रिकं त्रिकम् ।
योक्त्रयोः पञ्चके तत्र गणना चक्रलाङ्गले ॥ २ ॥
दण्डस्थे तु गवा हानिर्यूकस्थे स्वामिनो भयम् ।
लक्ष्मीर्लांगलयोक्त्रस्थे क्षेत्रारम्भदिनर्क्षके ॥ ३ ॥

लांगलमिति—लांगल हलाकार चक्र लिखेत् । कीदृशं योक्त्रद्वयसमन्वितम् । यूप यूपकाष्ठ योक्त्र वृषभारोधक काष्ठद्वय तत्सहितम् । तत्र दण्डिकामुपक्रम्य सूर्यभादित । सूर्याक्रान्तनक्षत्राद्दण्डिकाया हले यूपे च प्रत्येक द्वि द्वि स्थानद्वये त्रिक त्रिक नक्षत्राणा लिखेत् । योक्त्रयोस्त्रीणि त्रीणि नक्षत्राणि अमके द्वय नक्षत्रस्येति । नक्षत्रलेखनस्यायमनुक्रम । एवमभिजिता सह अष्टाविंशतिनक्षत्राणि मध्ये पचदशनक्षत्राणि सन्निविष्टानि भवन्ति । दण्डस्था इति । क्षेत्रारम्भादिनक्षत्रके क्षेत्रारम्भाग्निनक्षत्रे दण्डस्थे त्रिसख्यके गवा वृषभाना हानिर्विनाशो भवति । यूपस्थे यूपाष्टभागद्वयस्थे षट्सख्याके स्वामिनो भयम् । कृषिकर्तुर्मृति । अन्येषु नक्षत्रेषु लक्ष्मीर्भवतीति ॥ १–३ ॥

हल जूआ दो खूटे क साथ होता है । सूर्य के नक्षत्र स दिन नक्षत्र ( जिस दिन हल चलाना हो) तक क्रम स मध्य मार्ग से दण्डिका, हल और जूआ म दो स्थानों म ३ तीन और जूआ म पाच २ नक्षत्र देना चाहिये ।१।२। दड क नक्षत्र में हल चलान से गो की हानि, जूआ के नक्षत्र




में स्वामी को भय, लागल में हल चलाने से लक्ष्मी का लाभ होता है ॥ १–३ ॥

इति लांगलचक्रम्[1] ।

## अथ बीजोप्तिचक्रम् ।

सूर्यभाद्गुरगाः स्थाप्यस्त्रिनाड्येकान्तरः क्रमात् ।
मुखे त्रीणि गले त्रीणि भानि द्वादश चोदरे ॥ १ ॥

---

१ मतान्तरेण लाङ्गलचक्रम् ।
त्रिक त्रिक त्रिक पञ्च त्रिक पञ्च त्रिक त्रिकम् ।
सूर्यादिदिननक्षत्रमशुभ च शुभ क्रमात् ॥ १ ॥
अन्यच्च
रामरामगुणा पञ्च रामपञ्चगुणा गुणाः ।
विज्ञेय लाङ्गल चक्रम् अशुभ शुभमुच्यते ॥ २ ॥

पुच्छे तुर्यं बहिः पञ्च दिनभाच्च फलं वदेत् ।
वदने कृकले विद्यात्तुलकेङ्कारकरतथा ॥ २ ॥
उदरे धान्यवृद्धिश्च पुच्छे धान्यक्षयो मतः ।
ईति रोगभयं बाह्ये चक्रे बीजोप्तिसञ्ज्ञके ॥ ३ ॥

इति बीजोप्तिचक्रम् ।

सूर्य के नक्षत्र से दिन नक्षत्र तक गिनकर त्रिनाडी सर्पाकार चक्र में मुख में ३ नक्षत्र, गले में ३ नक्षत्र, १२ नक्षत्र पेट में, ४ नक्षत्र पूँछ में, और बाहर ५ नक्षत्र




रखकर फल को कहे । यदि दिन नक्षत्र मुख में पड़े तो रूई के सदृश अनाज होता है, गले में हो तो ( आग से ) जल जाय । पेट में हो तो अन्न की वृद्धि, पूँछ में हो तो अन्न की हानि और बाहर हो तो टिड्डी आदि और रोग का भय होता है ॥ १-३ ॥

इति बीजोप्तिचक्रम्[1] ।

## अथ धूपभचक्रम्

धूपचक्रं वृषाकारं[2] सर्वावयवसंयुतम् ।
लिखित्वा विन्यसेद्भानि धूपनामर्क्षपूर्वकम् ॥ १ ॥

---

१ राहुभादष्टम वाथार्कसूर्यभूपनभानि च ।
बीजोप्तिं यत्रयेत्तासां पुच्छत्रयापि च चतुष्टयम् ॥ १ ॥
मूर्ध्नि त्रीणि गले त्रय च अग्रे धिष्ण्यानि च द्वादश ।
स्यात्पुच्छे च चतुष्टयं बहिस्थो भानां स्थितं पञ्चकम् ।
सिक्त चञ्चत्कमसवृद्धिमधिक निस्तण्डुलानि क्रमा
स्यादीतिभयं भयं च फणितो बीजोप्तिकालेर्कभात् ॥ २ ॥
राहुस्थितं तु नक्षत्रं गण्यते च निशागमे ।
राहुभार्ता न विजानीयात्सर्वबीजानि वापयेत् ॥ ३ ॥
२ धूपचारंतु प्रवक्ष्यामि यत्राद्यावुत्तमं स्मृतम् ।
यस्मिन्धिष्ण्ये स्थिते चन्द्रे सप्ताहो त्रीणि चारयेत् ॥ १ ॥

रौद्रं हस्तं तथा पूर्वाषाढा भाद्रा तथोत्तरा ।
चतुर्थी जीवनाडी स्यात्सौम्यनाडी प्रकीर्तिता ॥ ७ ॥
पुनर्वसूत्तराफल्गुन्युत्तराषाढतारकाः ।
पूर्वाभाद्रा च शुक्राख्या पंचमी नीरनाडिका ॥ ८ ॥
पुष्यर्क्षं फल्गुनीपूर्वा अभिजिच्छततारका ।
षष्ठी नाडी च विज्ञेया बुधस्य जलनाडिका ॥ ९ ॥
आश्लेषार्क्षं मघाकर्णधनिष्ठा च तथैव च ।
अमृताख्या हि विज्ञेया सप्तमी चंद्रनाडिका ॥ १० ॥
मध्यमार्गे स्थिता सौम्या नाडी तस्याग्रपृष्ठतः ।
सौम्ययाम्यगतं ज्ञेयं नाडिकानां त्रिकं त्रिकम् ॥ ११ ॥
क्रूरा याम्यगता नाड्यः सौम्याः सौम्यदिगाश्रिताः ।
मध्यनाडी च मध्यस्था ग्रहरूपफलप्रदा ॥ १२ ॥
एकनाडी गताश्चेत्स्याद् ग्रहाः क्रूराः शुभा यदि ।
ततो बोधफलं वाच्य शुभं वा यदि वाशुभम् ॥ १३ ॥
ग्रहाः कुर्युर्महावातं गताश्चंडाख्यनाडिका ।
वायुनाडीगता वायु दहन्यामतिदाहकाः ॥ १४ ॥
सौम्यनाडीगता मध्या नीरस्था मेघवाहकाः ।
जलायां वृष्टिदश्चंद्रोऽमृते चाप्यतिवृष्टिदाः ॥ १५ ॥

अथात इति । अथानन्तरं ध्रुवचक्रकथनानन्तरं सप्तनाडीचक्रं प्रवक्ष्यामि येन ज्ञातमात्रेण विदो ज्योतिर्विदो वृष्टिं जानन्ति । कृत्तिकादीति—कृत्तिकादि कृत्तिकामुपक्रम्य साभिजित्सहितानि भानि क्रमेण लिखेत् । तत्र पन्नगाकृति सर्पाकृति सप्तनाडीभिः सप्तरेखाभिर्वेधं कर्त्तव्यं । तारेति—ताराचतुष्टयवेधेन चतुर्नक्षत्रवेधेन एकैकनाडी जायते प्रतिनाडि चत्वारि चत्वारि नक्षत्राणि भवन्ति । तासां नाडिकानां नामान्यहं वक्ष्ये तथा तासां फलानि च वक्ष्ये । कृत्तिका चेति—कृत्तिकाऽनुराधाविशाखा भरण्य ऊर्ध्वं उपरि स्थिता आद्या शनिनाडी सचन्द्रानाडीनाम्ना मता ख्याता । रोहिणीति—रोहिणीस्वाती ज्येष्ठाऽश्विनेति द्वितीया नाडिका मता । इयमाग्नेयप्रभवा नाडी वायुनाडीति । सौम्यमृगशिरश्चित्रामूलरेवत्य एतच् चतुष्टयं तृतीया अंगारका नाडी । दहनाख्या दहनानाम्नीति । रौद्रमिति—रौद्रादिनक्षत्रं हस्तपूर्वाषाढ उत्तराभाद्रपश्चेति

चतुर्थी जीवनाडी स्यात् सौम्यानाम्ना नाडी प्रकीर्तिता कथिता। पुनर्वस्विति-पूर्वसूत्तरा फाल्गुनी उत्तराषाढा पूर्वाभाद्रपदा चेति शुक्राख्या शुक्रनाडी पञ्चमी-नीरानाडी नाडिका। पुष्यर्क्षमिति-पुष्यपूर्वाफाल्गुनी अभिजित् शतभिषा चेति षष्ठी नाडी बुधाख्या बुधनाडी जलनाडिका विज्ञेया। आश्लेषार्क्षमिति-श्लेषाम घाश्रवणधनिष्ठा चेति सप्तमी चन्द्रनाडी अमृतानाडिका अमृतानाम्नीति सञ्ज्ञिता ततो वेधफल वान्य शुभ वा शुभम्। मध्यमार्गमिति-सौम्यनाडी मध्यमार्गस्थिता भवन्ति सौम्यनाडीमध्यस्था। एव सर्वनाडी महत्फलप्रदा भवन्ति। क्रूरयान्य-गतेति-स्पष्टम्। एकनाडीगतेति—द्वयाद्या क्रूरा शुभा वा यद्येकनाडीगता भवन्ति तदात शुभाशुभफल वक्तव्यम्। ग्रहेति-नाडिका चन्द्राख्या गता ग्रहा महावातान् कुर्यु वायुनाडीगता ग्रहा वायु, दहननाडीगता दाहम्। सौम्येति-नाडीमध्यमा तद्गता मध्यफलप्रदा इति भाव। नीरस्था नीरनाडीगता मेघग्राहका भवन्ति। जलायामिति-जलनाडीगतो चन्द्रो वृष्टिदश्चन्द्रनाडी तत्र-चन्द्रोऽतिवृष्टि ददातीत्यर्थ ॥ १-१४ ॥

अब म सप्तनाडी चक्र को कहता हूँ, जिसके ज्ञान से वृष्टि का ज्ञान साधकों को होता है। कृत्तिकादि अभिजित् के सहित क्रम से नक्षत्रों को लिखकर सप्तनाडी का वेध सप के आकार का करना चाहिये। एक २ नाडी में चार २ नक्षत्रों का वेध होता




है उनके नाम को और फल को मैं कह रहा हूँ। कृत्तिका, विशाखा, अनुराधा, भरणी इनकी प्रथम चण्डनाडी और इसके स्वामी शनि हैं। रोहिणी, स्वाती, ज्येष्ठा, अश्विनी की दूसरी वायुनाडी और इसके स्वामी सूर्य हैं। मृगशिरा, चित्रा, मूल, रेवती इनकी तीसरी दहननाडी और इसके स्वामी भौम हैं। आर्द्रा, हस्त,

पूर्वापाढ, उत्तराभाद्रपद, इनकी चौथी गुरु की सौम्य नाम की नाडी होती है। पुनर्वसु, उत्तराफाल्गुनी, उत्तरापाढ, पूर्वाभाद्रपद इनकी पांचवीं नीरनाडी शुक्र की है। पुष्य, पूर्वाफाल्गुनी, अभिजित्, शतभिषा इनकी छठी जलनाडी बुध की है। श्लेषा, मघा, श्रवण, धनिष्ठा इनकी अमृत नाडी चन्द्रमा की सातवीं है। मध्य में सौम्य नाडी है उसके आगे और पीछे उत्तर और याम्य सज्ञक तीन तीन नाडिया है। क्रूरग्रह याम्यनाडी में हो और शुभग्रह सौम्यनाडी में हों मध्यनाडी ज्यों की त्यों हो तो ग्रह के अनुसार फल होता है। एक नाडी में दो तीन आदि ग्रह गये हों चाहे वे क्रूर हों अथवा शुभ हों तो नाडी का शुभ या अशुभ फल होता है जिसे कहता हूँ। चडनाडी में ग्रह हों तो महावायु, वायुनाडी में हो तो वायु और अग्नि नाडी (दहन) में हों तो अत्यन्त गर्म पड़ता है। मध्य की सौम्यनाडी में अथवा नीरनाडी में ग्रह हों तो मेघ का आगमन, जल नाडी में अथवा चन्द्रनाडी में ग्रह हों तो अतिवृष्टि होती है ॥ १–१५ ॥

एकोप्येतत्फलं दत्ते स्वनाडीसंस्थितो ग्रहः।
सुभूतः सर्वनाडीस्थो दत्ते नाड्युद्भवम्फलम् ॥ १६ ॥
प्रावृट्काले समायाते रौद्रऋक्षगते रवौ।
नाडीवेधसमायोगाज्जलयोगं वदाम्यहम् ॥ १७ ॥
यत्र नाडीस्थितश्चन्द्रस्तत्रस्थाः खेचरा यदि।
क्रूरसौम्यविमिश्राश्च तद्दिने वृष्टिरुत्तमा ॥ १८ ॥
एकऋक्षसमायुक्ताः जायते यदि खेचराः।
तत्र काले महावृष्टिर्यावत्तस्यांशके शशी ॥ १९ ॥
केवलैः सौम्यपापैर्वा ग्रहैर्विद्धो यदा शशी।
तदातितुच्छ पानीय दुर्दिनं तु भवेद् ध्रुवम् ॥ २० ॥
यस्य ग्रहस्य नाडीस्थश्चन्द्रमास्तद् ग्रहेण चेत्।
दृष्टो युक्तः करोत्यम्भो यदि क्षीणो न जायते ॥ २१ ॥

एकोऽपीति—एकोऽपि स्वनाडीस्थ स्वनाड्युक्त फल करोति। पापोऽय शनि स्वनाडीस्थ कृत्तिकाच विशाखा मैत्राख्य भरणी तथेत्यत्राख्य स्वनाडीस्थ-श्चण्डाख्यनाडीस्थशनिश्चन्द्रो वायु करोति एव सूर्य स्वनाडीस्थो वायु, भौम स्वनाडीस्थो दाह करोति। जीव स्वनाडीस्थो मध्यम, नीरनाडीगत शुक्रो नीर बुधो जलनाडीस्थो जल चन्द्रोऽमृतनाडीगतोऽमृत जल-प्रकृत्यैकोऽपि भौम पुन पुन प्रावृट्काले सर्वनाडीगत सर्वफल चन्द्राख्यादि करोति। सर्व-

स्थानुमरणीय सर्वदैव चिन्त्य । प्रावृट्काले वर्षाकाले प्राप्ते रवौ रौद्रर्क्षगते नाडीनक्षत्रगते सति नाडीवेधसमायोगे सति अह जलयोग वदामि । यत्रेति–यत्र नाड्या चन्द्र स्थित तत्र सर्वे खेचरा सर्वे ग्रहा भवेयु क्रूरा क्षीणचन्द्र-कुजसूर्यशनय सौम्या पूर्णचन्द्रबुधगुरुशुक्राविति मिश्रा पापाशुभाश्च भवन्ति-तद्दिने उत्तमा वृष्टिर्भवति । एकत्रेति–सौम्ये पापग्रहे केवल सौम्यपापै-रन्योन्यमिलिते यदा शशी मिलितो भवति तदा पानीय तुच्छमल्प भवतीति ध्रुव निश्चित दुर्दिन भवेत् । एकऋक्षेति–स्पष्टम् । केवलैरिति–स्पष्टम् । यस्येति–चन्द्रमा यस्य ग्रहस्य नाड्या स्थितो भवति तद्ग्रहेण तेन ग्रहेण दृष्टो युक्त सन् अभ्रा जल करोति । यदि चन्द्र क्षीणो दृष्टो युक्तस्तदा जल न जायते पुष्टश्चेद्भवतीति ॥ १६–२१ ॥

एक भी ग्रह अपने नाडी में हो तो उस नाडी का फल देता है । भौम सभी नाडियों में उन २ नाडियों का फल देता है । वर्षाकाल में आर्द्रा नक्षत्र में रवि के होने से नाडीवेध होने से जलयोग होता है उसे कह रहा हूँ । जिस नाडी में चन्द्रमा है उसी में यदि क्रूरग्रह, शुभग्रह वा दोनों हों तो उसदिन उत्तम वृष्टि होती है । एक ही नक्षत्र में यदि ग्रह हों और उसी नक्षत्र में चन्द्रमा हो तो उसदिन अतिवृष्टि होता है । केवल शुभग्रह अथवा पापग्रह से चन्द्रमा विद्ध हो तो अत्यन्त तुच्छ वृष्टि होती है और उसदिन दुर्दिन होता है । जिस ग्रह के नाडी में चन्द्रमा हो यदि उस ग्रह से चन्द्रमा दृष्ट और युत हो किन्तु चन्द्रमा क्षीण न हो तो उसदिन वृष्टि होती है ॥ १६–२१ ॥

पीयूषनाडिगश्चन्द्रस्तत्र खेटाः शुभाशुभाः ।
द्वित्रिचतुःपञ्चपानीय दिनान्येकत्रिसप्तकम् ॥ २२ ॥
एवं जलाख्यनाडीस्थे चन्द्रे मिश्रग्रहान्विते ।
दिनार्धं दिवस पञ्चदिनानि जायते जलम् ॥ २३ ॥
नीरनाडिगते चन्द्रे तत्रस्थैः पूर्ववद्ग्रहैः ।
यामं दिनार्धकं त्रीणि दिनानि जायते जलम् ॥ २४ ॥
अमृतादित्रये यत्र भवन्ति सर्वखेचराः ।
तत्र वृष्टिः क्रमाज्ज्ञेया धृत्यर्कसप्तवासरैः ॥ २५ ॥
सौम्यनाडीगता सर्वे वृष्टिदास्ते दिनत्रयम् ।
शेषनाड्या महावातदुष्टवृष्टिप्रदा ग्रहाः ॥ २६ ॥
निर्जला जलदा नाडी भवेद्योगे शुभाधिके ।
क्रूराधिकसमायोगे जलदोऽप्यम्बुदाहकः ॥ २७ ॥

याम्यनाडीस्थिताः क्रूरा अनावृष्टिप्रसूचकाः ।
शुभयुक्ता जलस्थास्तेऽतिवृष्टिप्रदा ग्रहाः ॥ २८ ॥
एकनाडीसमारूढौ चन्द्रमाधरणीसुतौ ।
यदि तत्र भवेज्जीवस्तदा वारिमयी मही ॥ २९ ॥
बुधशुक्रौ यदैकत्र गुरुणा च समन्वितौ ।
चन्द्रयोगे तदा काले जायते वृष्टिरुत्तमा ॥ ३० ॥
जलयोगे समायाते यदा चन्द्रसितौ ग्रहौ ।
क्रूरैर्दृष्टौ युतौ वापि तदा मेघोल्पवृष्टिदः ॥ ३१ ॥
उदयास्तमये मार्गे वक्रयुक्ते च संक्रमे ।
जलनाडीगताः खेटा महावृष्टिप्रदायकाः ॥ ३२ ॥
व्रजति यदि कुजः पतङ्गमार्गे घट इव भिन्नतले जलं ददाति ।
यदि भवति च भास्कराग्रगामी प्रलयघनानपि शोषितुं समर्थः ॥

इति श्रीयामलीयस्वरोदये सप्तनाडीचक्रम् ।

पीयूषेति—प्रावृट्काले अमृताख्यनाड्यागतश्चन्द्र पुनस्तत्रैव भवति । नाड्या शुभाऽशुभादि मिश्रा द्विचतु पञ्चग्रहा भवन्ति तदा पानीयम् । कतिदिनानि पानीय भवति तत्र द्विचतुर्भिर्ग्रहै पापद्वयमेव चतुर्भिर्ग्रहैर्युक्तो वेधितश्च पीयूष नाडीगतश्चन्द्रस्तदा चतुर्भिर्दिनानि पानीय वाच्यम् । पञ्चभि शुभपापैस्तदा पञ्च दिनानि वाच्य पानीयम् । अथैकनक्षत्रस्थचन्द्रमेकदिनवर्षण युक्तमेतत् । द्विचतु- पञ्चपानीय इति कथन कथ सम्पद्यते । तत्रोच्यते प्रावृट अय वर्षणयोग यत्र एवंविधो योगश्चन्द्राद्भवति द्विचतु पञ्चभिर्ग्रहै यथासंख्य द्विदिनं चतुर्दिन पञ्च दिनानि पानीयमिति योग्यम् । नरहरिस्तु पीयूषनाडिगोऽमृतनाडीगतश्चन्द्र शुभाऽशुभा सौम्यक्रूरखेटा ग्रहा द्विचतु पञ्च भवति । द्वौ वा पापशुभौ चत्वार पापशुभा पञ्चपापशुभास्तदा एकत्रिसप्तदिनानि पानीय पतति । द्विग्रहकृत योगे एकदिन चतुर्ग्रहकृतयोगे पञ्च पञ्चग्रहकृतयोगे सप्तदिनानि वृष्टिरिति । एवेति—एव द्विचतु पञ्चक्रमेण मिश्रग्रहान्विते चन्द्रे जलनाम नाडीस्थे दिनानि द्विदिवस पञ्चदिनानि व्याप्य जल पतति द्विग्रहयोगे दिनार्धं चतुर्ग्रहयोगे दिवस पञ्चग्रहयोगे पञ्चदिनानि व्याप्य वृष्टिरनुक्रमेण भवतीत्यर्थं । नीरनाडी स्थित इति—चन्द्रे नीरनाडीस्थिते तत्र पूर्ववद्द्विचतु पञ्चसंख्याका पापशुभग्रहा स्थिता नीरनाडीस्था भवन्ति तदा याम दिनार्धम् त्रीणि दिनानि व्याप्य वृष्टिर्भवति । यामग्रहर अमृतादिमय इति । अमृतादि त्रिनाडीक्रमेण अमृतज

लनीरनाडीत्रयेषु यदि सर्वे खेचरा सर्वे ग्रहा भ्रमेयुस्तदा घृत्यर्कवासरै समा स्तुल्यवासरास्तदवधि वृष्टिर्भवति। पराऽमृतनाडीस्था सर्वे ग्रहास्तदा अष्टादशवासरावधिर्भवति यदि जलनाड्या सर्वे ग्रहास्तदार्कवासरै द्वादशदिनै समा यावद्द्वादशवासर च वृष्टिर्भवति। यदा नीरनाड्या सर्वे ग्रहास्तदा रसवासरै षड्भिर्दिनै समा षड्भिर्दिनानि यावद् वृष्टिर्भवतीति। सौम्येति—सौम्यनाडीचतुर्थनाडिकात हृता सर्वे ग्रहा भवन्ति तदा दिनत्रय वृष्टिदा शेषनाड्या वायुदहनचन्द्रनाड्या स्थिता सर्वे ग्रहा भवन्ति तदा दिनत्रय वृष्टिदा। शेषनाड्या वायुदहनाचन्द्रनाड्या स्थिता सर्वे ग्रहा वायुसहिता वृष्टिप्रदा भवन्ति। एव वातादिवृष्टिसमयो ज्ञात प्रत्यक्षीभवेदिति तात्पर्यम्। निर्जलेति—नाडीशुभाधिका सर्वेऽतिजलदो मेघो निर्जलो भवेत्, जलनाड्या क्राधिकसमायोगे सति क्रूरा यद्यधिका भवति शनेश्च नाड्या कृत्तिकाविशाखानुराधा भरणीति, रवे नाड्या रोहणीस्वाती ज्येष्ठाऽश्विनीति। कुजस्य दहना मृगशिरश्चित्रामूल रेवतीति गुरोश्च सौम्यनाड्यो आर्द्राहस्तपूर्वाषाढोत्तराभाद्रेति, शुक्रस्य पद्ममीपुनर्वसूत्तराफाल्गुनी उत्तराषाढापूर्वभाद्रपदेति। बुधस्य षष्ठी जलनाडी पुष्यपूर्वाफाल्गुनी अभिजित् शतभिषेति चन्द्रस्य सप्तमी अमृतनाडीति। श्लेषामघाश्रवणो धनिष्ठेति। याम्या नाडीति—क्रूरा रविशनिभौमराहुकेतव याम्यनाडी गता चन्द्रेवायुदहननाडीगता यावत्काल तावत् अनावृष्टिप्रसूचका अनावृष्टिं सूचयति ते यदि जलसस्था भवन्ति तथा जलराशयो मकरार्धकुम्भमीनकर्कस्तम्भराशगतास्तथा शुभयुक्ता शुभो गुरुबुधशुक्र पूर्णचन्द्रस्ते अतिवृष्टिप्रदा। विशेषत सौम्यनाडीस्थैरिद फल वाच्यम्। एकनाडी इति—चन्द्रो धरणीसुतो भवतस्तत्र चेज्जीवो बृहस्पतिर्भवेत् तदा मही वारिजलपूर्णेत्यर्थं। बुधशुक्राविति—यदि बुधशुक्रौ गुरुणा समन्वितौ एकनाडीस्थितौ भवत अर्थात् गुरुशुक्रबुधा एकनाड्या भवन्ति तत्रचेति चन्द्रो भवति तदातस्मिनकाले उत्तमा वृष्टि जायते। जलयोगेति—जलयोगे समायाते—को अर्थं—यस्मिन्योगे विचारित तस्मिन्योगे यदि चन्द्रशुक्रौ द्वादशारचक्रे क्रूरदृष्टौ अथवा क्रूरैर्युतौ तदा अल्पवृष्टि पूर्णयोगे स्वल्पवृष्टि करोति। उदयास्तेति—ग्रहाणामुदयेस्तमेने च तथा मार्गे तथा वक्रगे सक्रमणे मासमक्रमे। तथा जलनाडीगता खेटा महावृष्टिप्रदा मता कथिता। भवतीति—स्पष्टम्॥ २९–३३॥

पीयूष ( अमृत ) नाडी में चन्द्रमा हो और उसमें शुभ पाप दोनों हों तो एक, तीन, सातदिन तक तीन, चार, पांच बार पानी बरसता है। इसी प्रकार जलनाडी में चन्द्रमा मिश्रित ग्रह ( शुभ पाप ) से युत हो तो डेढ़ दिन या ५ दिन तक वृष्टि होती है। नीरनाडी में चन्द्रमा हो और उसमें मिश्र ग्रह हों तो तीन दिन डेढ़ प्रहर तक वृष्टि होती है। अमृतादि तीन नाडियों में सभी ग्रह हों तो क्रम से १८, १२, ६ दिन तक वृष्टि होती है। सौम्य नाडी में सभी ग्रह तीन दिन तक वृष्टि करते हैं।

शेषनाडियों में महावायु और दुष्टवृष्टि को करते हैं। निर्जल नाडी में अधिक शुभग्रह हों तो जलद नाडी हो जाती है। जलद नाडी में अधिक पापग्रहों का योग हो तो जलद नाडी केवल बादल ही करके रह जाती है। याम्यनाडी में क्रूर ग्रह हों तो अनावृष्टि के सूचक होते हैं। शुभयुक्त और जलाश में हों तो ये अधिक वृष्टि करते हैं। एक ही नाडी में चन्द्रमा और मंगल हों यदि उसी में गुरु भी हो तो वृष्टि से पृथ्वी समुद्र के समान हो जाती है। बुध शुक्र एक राशि पर गुरु के साथ हों यदि चन्द्रमा योग करे तो उत्तम वृष्टि होती है। जलयोग में चन्द्रमा और शुक्र को क्रूरग्रह देखता हो तो मेघ अल्पवृष्टि को देते हैं। ग्रह के उदय या अस्त समय में मार्गी के समय वक्री के समय में संक्रान्ति के समय जलनाडी में स्थित ग्रह अधिक, वृष्टि करते हैं। यदि भौम सूर्य के साथ हो तो दूसरे देश में वृष्टि होती है और सूर्य से आगे हो तो प्रलय के बादलों को भी सोखने में समर्थ होता है ॥ २२-२३ ॥

इति सप्तनाडीचक्रम्

## अथ समुद्रचक्रम् ।

कृत्तिकादिलिखेच्चक्रं मेषसंक्रान्तिवासरात् ।
दिनर्क्षं भवेद्यत्र तत्र वृष्टिफलाफलम् ॥ १ ॥
अतिवृष्टिः समुद्रे च तटे वृष्टिस्तु शोभना ।
सन्धौ च खण्डवृष्टिः स्यादनावृष्टिश्च पर्वते ॥ २ ॥

इति समुद्रचक्रम् ।

मेष संक्रांति के दिन जो नक्षत्र हो वहाँ से अभिजित् के सहित २ नक्षत्र समुद्र में २ नक्षत्र तट प्रदेश में १ नक्षत्र पर्वत में और २ नक्षत्र संधि में चारों दिशाओं में दो १

| | | |
|---|---|---|
| २ तट | २ समुद्र | २ संधि |
| १ गिरि | | १ गिरि |
| २ संधि | | २ तट |
| २ समुद्र | मेषार्कदिनभा दत्रदिनर्क्षम् | २ समुद्र |
| २ तट | २ समुद्र | २ संधि |
| १ गिरि | | १ गिरि |
| २ संधि | | २ तट |

नक्षत्र लिखे जैसा कि चक्र में दिया हुआ है। जिस दिन वृष्टि [redacted] विचार करना हो उस दिन का जो नक्षत्र है वह जिस भाग में हो उससे वर्षा का विचार करे। दिन नक्षत्र समुद्र में हो तो अत्यन्त वृष्टि, तट प्रदेश में हो तो शुभद वृष्टि, संधि में हो तो खण्ड वृष्टि और पर्वत में हो तो अनावृष्टि होती है ॥ १-२ ॥

इति समुद्रचक्रम्

अथ स्त्रीपुंनक्षत्राणि ।

आर्द्रादिदशकस्त्रीणां विशाखात्रि नपुंसकम् ।
मूलाचतुर्दशः पुंसां नक्षत्राणि क्रमाद्बुधैः ॥ १ ॥
वायुर्नपुंसके भे च स्त्रीणां भे चाभ्रदर्शनम् ।
स्त्रीणां पुरुषसंयोगे वृष्टिर्भवति निश्चितम् ॥ २ ॥

इति स्त्रीपुंनक्षत्राणि ।

आर्द्रा से १० नक्षत्र स्त्री संज्ञक, विशाखा से ३ नक्षत्र नपुंसक संज्ञक और मूल से १४ नक्षत्र पुरुष संज्ञक होते हैं, उसका फल इस प्रकार है। संक्रांति के दिन रवि

| स्त्री संज्ञक | पुरुष संज्ञक | नपुंसक संज्ञक |
|---|---|---|
| आ पुन पु श्लो म पू फा उ फा ह चि स्वा | मू पूषा उषा श्र धनि शत पू भा उभा रे अश्वि भर कृ रो मृग | वि अनु ज्यो |

चन्द्रमा नपुंसक नक्षत्र में हों तो उस मास में वायु अधिक होती है। स्त्री संज्ञक नक्षत्र में हों तो मेघ घिरे रहें और स्त्री पुरुष का संयोग हो तो अत्यन्त वृष्टि होती है ॥ १-२ ॥

इति स्त्री पुंयोग

अथ रविचन्द्रयोगचक्रम् ।

ऋक्षप्रवेशो यदि भास्करस्य चन्द्रे त्रिकोणे यदि केन्द्रगे वा ।
जलालयस्थे भृगुजे क्षितौ युतो सम्पूर्णमेघा जलदा भवन्ति ॥१॥
मत्स्यः कुलीरे मकरे बहूदकं कुम्भे वृषे चापजलार्धमात्रम् ।
अलौ च तौली जलसंज्ञमाहुः सिंहादिशेषा अजला भवन्ति ॥२॥
कृत्तिकादित्रयं ऋक्षमारुद्रात्पञ्चभिः सह ।
पूर्वाषाढाचतुष्कं च पूर्वाभाद्रपदान्तिमे ॥ ३ ॥
इत्येव चन्द्रनक्षत्रं शेषं सूर्यस्य उच्यते ।
सूर्ये सूर्ये भवेद्वायुश्चन्द्रे चन्द्रे न वर्षति ॥ ४ ॥
चन्द्रसूर्यसमायोगस्तदा वर्षति माधवः ॥ ५ ॥

इति चन्द्रसूर्ययोगः ।

सूर्य के नक्षत्र प्रवेश के समय चन्द्रमा त्रिकोण या केन्द्र में हों और जलचर राशि में शुक्र से देखा जाता हो या युत हो तो सम्पूर्ण मेघ जल देते हैं। मीन, कर्क, मकर राशि में हों तो अत्यन्त जल, कुम्भ, वृष, धन राशि में हों तो आधा जल और वृश्चिक, तुला में हों तो स्वल्प जल और सिंहादि शेष राशियों में हों तो जल नहीं बरसता है। कृत्तिका से ३ नक्षत्र, आर्द्रा से ५, और पूर्वाभाद्रपद से ३ नक्षत्र ये ११ नक्षत्र चन्द्रमा के हैं शेष नक्षत्र सूर्य के हैं, संक्रांति के समय दोनों रवि चन्द्र सूर्य के ही नक्षत्र में हों तो वायु, दोनों चन्द्र नक्षत्र में हों तो वर्षा नहीं, चन्द्र सूर्य का योग हो तो वर्षा होती है ॥ १–५ ॥

## अथ वृष्टियोगाः।

तदनुग्रहयोगः[1]

स्वातीपयोत्तरा रौद्रे प्रजापत्युत्तरासु च।
यावत्तिष्ठति भूमीजस्तावदेव न वर्षति ॥ १ ॥
इन्दौ शनौ गिरौसस्थौ भानुर्वा भूमिनन्दनः।
शिशोरिवायुर्वा वर्षं भूलोके भूतिदं भवेत् ॥ २ ॥
कनकं पुरतो गच्छेद्भानुभार्गवयोरपि।
तुषारवर्षः पर्जन्यो वर्षेयुः खण्डमण्डलम् ॥ ३ ॥
जलराशिस्थिते चन्द्रे जामित्रे नवमे तथा।
अर्कसूनुश्च भौमश्च अतिवृष्टिं च मुञ्चति ॥ ४ ॥
कुजज्ञौ रविजश्चैव शुक्रस्याग्रे सदा यदि।
शुद्धोतिवायुर्दुर्भिक्षं जलनाशकरस्तथा ॥ ५ ॥
प्रावृषेंदुसितः सप्तमराशिगः शुभवीक्षितः।
मन्दत्रिकोणसप्तस्थो अथवा वृष्टिकृद्भवेत्।
भृगोः सुते प्रवृष्टिश्च शीतरश्म्यंतरस्थितः ॥ ६ ॥

---

१ ग्रन्थान्तरे रोहिणी वासचक्रम्—
मेषार्कदिनगाद्दद्वयमन्धौ द्वय तटे।
एक गिरौ द्वय सन्धौ विदिक्षु च तथा न्यसेत् ॥ १ ॥
साभिजिच्च क्रमेणैतत्फल दद्यात्तु रोहिणी।
बहुवृष्टिः समुद्रे स्यात्तटे वृष्टिश्च शोभना ॥
गिरौ सन्धौ स्वल्पवृष्टिरित्याहुः पूर्वसूरयः ॥ २ ॥

सौम्ये विशेषेण पतङ्गपुत्राद्यदि त्रिकोणे यदि केन्द्रगे वा ।
जलालयस्थे भृगुजेक्षिते वा मेघाश्च सम्पूर्णजला भवन्ति ॥७॥

गुरौ चन्द्रे च जामित्रे सितादर्कांद् गुरावपि ।
जामित्रेऽर्को ग्रहाः सर्वे अनावृष्टिर्भवेत्तदा ॥ ८ ॥

अत्र च—वृष्टिः शीतकरो भृगुपुत्रात्सप्तमराशिगतः शुभदृष्टः ।
सूर्यसुतान्नवपञ्चमगो वा सप्तमगश्च जलागमनाय ॥ ९ ॥

पूर्वे स्वातित्रये भानौ पश्चिमे पितृपञ्चकम् ।
अनावृष्टिर्विजानीयाद्विपरीते प्रवर्षणम् ॥ १० ॥
पुरोऽङ्गारमनावृष्टिः पुरो शुक्रप्रवर्षणम् ।
पुरो देवगुरौ वह्निः पुरो सौम्योथवानिलः ॥ ११ ॥
ज्येष्ठमासि सिते पक्षे रौद्रादि दशतारकाः ।
सजला निर्जला ज्ञेया निर्जला सजला भवेत् ॥ १२ ॥

इति वृष्टियोगफलम् ।

स्वाती, पूर्वाषाढ, उत्तराषाढ, आर्द्रा, रोहिणी, उत्तराफाल्गुनी नक्षत्र में जब तक मङ्गल रहता है तब तक वृष्टि नहीं होती है। चन्द्रमा शनि गिरि ( पर्वत ) में हों, सूर्य, मङ्गल हों तो भूलोकवासियों को ऐश्वर्य की प्राप्ति होती है। सूर्य और शुक्र से आगे गुरु हो तो पाला की वर्षा खण्ड मण्डल ( कहीं कहीं ) होती है। चन्द्रमा जल राशि में और शनि मङ्गल सातवें या नवम में हों तो अत्यन्त वर्षा होती है। यदि भौम बुध शनि शुक्र से आगे हों तो अत्यन्त वायु चले, दुर्भिक्ष और अनावृष्टि हो। प्रावृट् ऋतु में चन्द्रमा शुभ सातवें राशि में हों और शुभ ग्रह से देखे जाते हों अथवा शनि त्रिकोण या सप्तम में हो तो वर्षाकारक होता है। शुक्र चन्द्रमा के रश्मि के अन्तर्गत हो तो वृष्टि होती है। विशेषकर शनि से त्रिकोण या केन्द्र में बुध हो और जलचर राशि में गये हुये शुक्र से देखा जाता हो तो प्रभूत वृष्टि होती है। शुक्र से सातवें भाव में गुरु और चन्द्रमा हों, सूर्य से सातवें भाव में गुरु हो अथवा सातवें भाव में सूर्यादि सभी ग्रह हों तो अवर्षण होता है। शुक्र से सातवें भाव में चन्द्रमा शुभग्रह से दृष्ट हो तो वृष्टि होती है। शनि से ९।५ या ७ भाव में चन्द्रमा हो तो वृष्टि होती है। स्वाती से ३ नक्षत्र पूर्व में, मघा से ५ नक्षत्र पश्चिम में, सूर्य के रहने से वृष्टि होती है। इससे विपरीत नक्षत्र में सूर्य हों तो अनावृष्टि होती है। सूर्य से आगे भौम हो तो अनावृष्टि, शुक्र हो तो वृष्टि, गुरु आगे हो तो गर्मी अधिक, बुध हो तो वायु चलती है। ज्येष्ठ मास के शुक्ल पक्ष में आर्द्रा नक्षत्र से १० नक्षत्र क्रम से सजल और निर्जल होते हैं ॥ १-१२ ॥

इति वृष्टियोगफलम् ।

अथ शुक्रोदयास्तफलम् ।

आदित्ये बहुवात च भूमिजे शत्रुपीडनम् ।
बुधे चैव तु दुर्भिक्षं शनिवारे महद्भयम् ॥ १ ॥
सोमे शुक्रे गुरौवापि सुभिक्षं जायते ध्रुवम् ।
उदयं भार्गवे चैत्रे वज्रिराजव्यवस्थिते ॥ २ ॥
वैशाखे च भवेन्नाशो सर्वनाशं चतुष्पदम् ।
ज्येष्ठे च सजला पृथ्वी आषाढे जलशोषके ॥ ३ ॥
श्रावणे कम्पिता भूमौ धनधान्यं नभस्यके ।
आश्विने कार्तिके मार्गे सहित च प्रवर्तते ॥ ४ ॥
पौषे चैव तथा माघे राष्ट्रभङ्गंविनिर्दिशेत् ।
फाल्गुने अल्पवृष्टिश्च उदयास्तभृगोः फलम् ॥ ५ ॥

इत्युदयास्तफलानि ।

यदि शुक्र का उदय या अस्त रविवार को हो तो अधिक वायु चले। भौमवार को शत्रुपीडा, बुधवार को हो तो दुर्भिक्ष, शनिवार को हो तो भय और सोमवार, शुक्रवार, गुरुवार को हो तो सुभिक्ष होता है। यदि चैत्र मास में शुक्र का उदय या अस्त हो तो वज्रवत शासन हो। वैशाख मास में चतुष्पदों का नाश, ज्येष्ठ मास में वर्षा, आषाढ मास में जल का अभाव, श्रावण मास में भूकम्प, भाद्रपद में धनधान्य की वृद्धि, आश्विन, कार्तिक और मार्गशीर्ष मास में 'हितकर' और पौष तथा माघ मास में राष्ट्र का भङ्ग और फाल्गुन मास में अल्पवृष्टि होती है ॥ १–५ ॥

इत्युदयास्तफलम् ।

अथ मेघद्वाराणि ।

भरण्याद्यष्टऋक्षाणि मेघद्वारं प्रकीर्तितम् ।
प्रभूत वर्षते मेघः सुभिक्ष जायते ध्रुवम् ॥ १ ॥
मघादि पञ्च ऋक्षाणि वायुद्वार प्रकीर्तितम् ।
उन्नता चैव मेघाश्च न वर्षन्ति कदाचन ॥ २ ॥
स्वात्यादित्रीणि ऋक्षाणि धर्मद्वारं प्रकीर्तितम् ।
सुभिक्षं क्षेममारोग्यं बहुवृष्टिश्च जायते ॥ ३ ॥
ज्येष्ठादि पञ्चऋक्षाणि रेतद्वार प्रकीर्तितम् ।
उन्नता अल्पमेघाश्च अल्पसस्यश्च जायते ॥ ४ ॥

घनिष्ठादिषड्ऋक्षाणि हेमद्वारं प्रकीर्तितम् ।
सुभिक्षं जायते सर्वं मेघा वर्षंति तु ध्रुवम् ॥ ५ ॥

इति स्वरोदये मेघद्वाराणि ।

भरणी से आठ नक्षत्र मेघ द्वार सञ्ज्ञक होते हैं। इसमें संक्रांति हो तो अत्यन्त वर्षा होती है। मघा से पाँच नक्षत्र वायु द्वार सञ्ज्ञक हैं इसमें संक्रांति होने से बड़े बड़े मेघ दिखाई पड़ते हैं किन्तु वर्षा नहीं होती है। स्वाती से ३ नक्षत्र धर्मद्वार सञ्ज्ञक होते हैं इसमें संक्रांति होने से सुभिक्ष, कल्याण, आरोग्यता और अत्यन्त वृष्टि होती है। ज्येष्ठा से ६ नक्षत्रों की रेतद्वार सञ्ज्ञा है इसमें संक्रांति होने से बड़े बड़े मेघ दिखाई पड़ते हैं अल्पवृष्टि और अल्प उपज होती है। घनिष्ठा से ६ नक्षत्र हेमद्वार कहा जाता है इसमें संक्रांति होने से सुभिक्ष और सुवृष्टि होती है ॥ १-५ ॥

अथ वृष्टिलक्षणम् ।

अतिवातं च निर्वातमत्युष्णं शीतशीतलम् ।
अत्यभ्रं च निरभ्रं च षड्विधं मेघलक्षणम् ॥ १ ॥
यावत् काकोदरा मेघा यावत्सूर्यः शशी समः ।
यावन्नैर्ऋतिको वायुस्तावद्देवो न वर्षति ॥ २ ॥
चित्रास्वातिविशाखासु श्रवणेति जलं तथा ।
तदा स्तुत्यादिकं कृत्वा नदीतीरे उपासनात् ॥ ३ ॥
श्रवणे स्वातिपश्चम्यामस्तं याति दिवाकरः ।
अवृष्टिर्यदि पर्जन्यो जलसादपि सर्वथा ॥ ४ ॥
उदय सोमजो याति चास्तं याति भृगोः सुतः ।
श्रावणे चैत्रमासे तु तत्र पातं च दुर्लभम् ॥ ५ ॥
उत्तरा पूर्वसस्या च परसस्या च रेवती ।
अश्विनी सर्वसस्या च यदि वर्षति कृत्तिका ॥ ६ ॥
रेवती तोयनाशाय धान्यनाशाय चाश्विनी ।
भरणी सर्वनाशाय यदि वर्षति कृत्तिका ॥ ७ ॥
स्वाती ज्येष्ठा मघार्द्रा च रोहिण्युत्तरमेव च ।
भूमिजस्तत्र चायाति घनावृष्टिकरः स्मृतः ॥ ८ ॥

इति वृष्टिलक्षणम् ।

अतिपात, निर्वात, अत्युष्ण, शीतशीतल, अयभ्र, निरभ्र—ये ६ प्रकार के मेघ होते हैं। जब तक काक के उदर के समान मेघ हो, और सूर्य चन्द्रमा मुख्य होते हैं तब तक वृष्टि नहीं होती है। चित्रा, स्वाती, विशाखा श्रवण नक्षत्र जल के हैं यदि इनका योग हो तो प्रार्थना आदि करने से वृष्टि होती है। श्रावण मास में पञ्चमी तिथि स्वाती नक्षत्र में सूर्य का अस्त हो तो अवृष्टि होती है। बुध का उदय और शुक्र का अस्त यदि श्रावण या चैत्र मास में हो तो ओला आदि गिरते हैं। उत्तरा पूर्वसस्या और रेवती परसस्या और अश्विनी सर्वसस्या है। रेवती जलनाशक, अश्विनी धान्यनाशक, भरणी सर्वनाशक और कृत्तिका भी सर्वनाशक है। इनमें जलवर्षण से उक्त फल होते हैं। स्वाती, ज्येष्ठा, मघा, आर्द्रा, रोहिणी, तीनों उत्तरा, इनमें मङ्गल हो तो अनावृष्टि होती है॥ १–८॥

इतिवृष्टिलक्षणम्।

## अथ कालदंष्ट्राचक्रम्।

नवोर्ध्वगानि धिष्ण्यानि नवतिर्यग्गतानि च।
अधोगतानि धिष्ण्यानि नव चैव विनिर्दिशेत्॥ १॥
चतुर्नाडीगतो वेधो मध्ये ऋक्षत्रयोज्झितः।
सर्पाकारस्य चक्रस्य कालचक्रं प्रजायते॥ २॥
त्रीणि मध्यगतर्क्षाणि तानि कालमुखानि तु।
कोणस्थिते च द्वे धिष्ण्ये ते च दंष्ट्राद्वयं मतम्॥ ३॥
दिनर्क्षमादितः कृत्वा नामर्क्षं यत्र संस्थितम्।
मुखदंष्ट्रागते मृत्युः शुभमन्यत्र संस्थिते॥ ४॥
ज्वरिते नष्टदष्टे च विवाहे विग्रहे रणे।
कालदंष्ट्रास्यगे मृत्युर्नामर्क्षे तु मरद्वयम्॥ ५॥

इति कालदंष्ट्राचक्रम्।

नवोर्ध्वगानीति।—निराअन्नारभ्य नव ऋक्षाणि नक्षत्राणि ऊर्ध्वगानि अथ प्रदेशादूर्ध्वक्रमेण तिर्यग्गतानि एवं नव नक्षत्राणि अधोगतानि लेख्यानि। चतुरिति। तस्य सर्पाकारस्य चक्रस्य चतुर्नाडीगतो वेधः कर्तव्यः। कीदृशः मध्यऋक्षत्रयोज्झितः मध्ये स्थानत्रये ऋक्षत्रयोज्झितः मध्ये भिन्न भिन्न-स्थाने ऋक्षत्रयेण रहितः। एवंविधं कुर्यादित्यर्थः। एवं व्यवस्थया कालचक्रं प्रजायते। अन्यत्स्पष्टम्॥ १–५॥

अश्वचक्रम्

घोड़े के समान चक्र बनाकर उसमें घोड़े के नाम के नक्षत्र से मुख से आरम्भ कर नक्षत्र क्रम के अनुसार २८ नक्षत्रों को लिखे। मुख, आंख, कान, शिर, पोंछ, चारों पैरों में दो २ नक्षत्र और पाच २ पीठ और पेट में देवें। जहां शनि हो उससे फल का विचार करे। यदि घोड़े के मुख, आंख, पेट और शिर के नक्षत्र में शनि हो तो संग्राम में उस घोड़े पर चढ़कर युद्ध करने से राजा शत्रुओं को मार देता है। कान, पैर, पोंछ के नक्षत्रों में जिस घोड़े के शनि हो वह घोड़ा युद्ध में श्रम,



हानि करता है। इन स्थानों में जब शनि हो तो राजा उस घोड़े को पट्टबंधन में, यात्रा में, युद्ध में त्याग कर दे। जिस राजा का घोड़ा पृथ्वी पर घूमता है उसके देशान्तर स्थित सभी शत्रु शंकित रहते हैं। जिसके पास घोड़ा है उसी की पृथ्वी है ऐसा वचन पंडितों का है। बिना घोड़े के राजा के सभी पदार्थ शोभायमान नहीं होते।

इति अश्वचक्रम्।

## अथ शुद्धमुहूर्तविषये अश्वचक्रम्

अश्वानां कर्म कर्तव्यं स्वातौ तिष्ये पुनर्वसौ।
धनिष्ठाद्वितये हस्ते रेवतीरोहिणीद्वये ॥ १ ॥
सूर्यभात्स्थिरऋक्षेषु मुखे रामा यशस्तथा।
हृदये पञ्च लाभोयं पादे पण्नश्च भंगदः ॥ २ ॥
पुच्छे वेदा महाहानिः पृष्ठेब्धिर्मृत्युरादिशेत्।
अश्वाकारं लिखेच्चक्रं पूर्वग्रंथानुसारतः।
स्कंधारभ्यमुखस्यांतं सूर्यभात्साभिजिन्न्यसेत् ॥ ३ ॥
पञ्चदशयमैर्वेदबाणादग्निक्रमेण च।
जन्मनक्षत्रमारभ्य गण्यते चन्द्रभे विधिः।
नवभिस्तु हरेद्भागं शेषं वाहनमुच्यते ॥ ४ ॥

ग्रन्थान्तरे—

अश्वाकारं लिखेच्चक्रं साभिजिद्भानि विन्यसेत्।
स्कन्धे च सूर्यभात् पञ्च पृष्ठे च दश संन्यसेत् ॥ ५ ॥

पुच्छे द्वौ दीयते प्राज्ञैश्चतुष्पादे चतुष्टयम् ।
उदरे पंच ऋक्षाणि मुखे द्वे तुरगस्य च ॥ ६ ॥
धनलाभो मुखे सम्यग् वाजिनश्यति चोदरे ।
चरणस्थे रणे भंगः पुच्छे पत्नी विनश्यति ॥ ७ ॥
अर्थलाभो भवेत्पृष्ठे स्कंधे स्कंधपतिर्भवेत् ।
रासभो रत्नहंता च वाजी रत्नप्रदो भवेत् ॥ ८ ॥
हस्ते लक्ष्मीजयौ दद्यान्मेषे च मरणप्रदः ।
जंबुकश्चायुषं हंति सिंहे वैरं च गर्जनम् ॥ ९ ॥
काके वार्ता कलिश्चैव शिखिहंसौ शुभावहौ ॥ १० ॥

इति स्वरोदये अश्वचक्रम्

घोड़े के सभी कर्म स्वाती, पुष्य, पुनर्वसु, धनिष्ठा, शतभिषा, हस्त, रेवती, रोहिणी, मृगशिरा नक्षत्र में करना चाहिये। इसमें जिस समय अश्वकृत्य करना हो उस दिन के नक्षत्र को सूर्य के नक्षत्र से गिनकर अश्वमुख में ३ नक्षत्र की कल्पना करे इसमें कर्म करने से यश का लाभ, इसके बाद ५ नक्षत्र हृदय में कल्पना करे। इसमें कृत्य करने से लाभ पुनः ५ नक्षत्र उदर में कल्पना करें इसमें अश्वकृत्य करने से लाभ, पुनः ४ नक्षत्र पाद में कल्पना करें इसमें कार्य करने से कार्य की हानि, पुनः ५ नक्षत्र पांछ में कल्पना करें इसमें कृत्य करने से मृत्यु होती है। पूर्व कहे अनुसार अश्व का आकार बनाकर फल का विचार करें। इसमें सूर्य के नक्षत्र से अभिजित् सहित अश्व के स्कंध से मुख पर्यन्त ५ अंगों में क्रमसे १५।२।२।४।५ नक्षत्र स्थापन करें। जन्म नक्षत्र से अश्व के नक्षत्र तक गिन कर नौ से भाग देने से शेष वाहन होता है। एक अश्व के आकार का चक्र बनाकर उसमें अभिजित् के सहित नक्षत्रों का न्यास करें। सूर्य के नक्षत्र से ५ नक्षत्र स्कंध में, पुनः १० नक्षत्र पीठ में, पुनः २ नक्षत्र पोंछ में, ४ नक्षत्र चारों पैरों में ५ नक्षत्र उदर में और इसके बाद २ नक्षत्र घोड़े के मुख में स्थापित करें। मुख के नक्षत्र में कृत्य करने से धन का लाभ। पेट के नक्षत्र में घोड़े की हानि। पैर के नक्षत्र में संग्राम में हानि, पोंछ के नक्षत्र में स्त्री की हानि, पीठ के नक्षत्र में धन का लाभ, स्कंध के नक्षत्र में स्कंध का स्वामित्व, होता है। यदि रासभ ( गदहा ) वाहन हो तो रत्न की हानि। घोड़ा वाहन हो तो रत्न का लाभ, हाथी वाहन हो तो लक्ष्मी और विजय, मेष ( भेड़ा ) वाहन हो तो मृत्यु, जंबुक ( सियार ) वाहन हो तो आयुष्य की हानि। सिंह वाहन हो तो वैर और गर्जन। काक वाहन हो तो झगड़ा और मयूर या हंस वाहनों से शुभ होता है ॥ १-१० ॥

## अथ रथचक्रम्

रथचक्रं लिखेचादौ शकटाकृतिशोभनम् ।
रथाग्रे त्रित्रिशूलं च चतुश्चक्रं त्रिनाडिकम् ॥ १ ॥
भानुभं मध्यशूलाग्रे ततः सव्यगतानि तु ।
त्रीणि त्रीणि लिखेदेवं सप्तविंशतिसंख्यया ॥ २ ॥
महारथिकभं यत्र तत्र वक्ष्ये शुभाशुभम् ।
शृंगे मृत्युर्जयं चक्रे रथे सन्धिस्त्रिदण्डके ॥ ३ ॥

इति रथचक्रम्

रथचक्रमिति । सुगमम् ॥ १-३ ॥

### रथचक्रम्

गाड़ी के आकार का रथचक्र बनावें। रथ के आगे तीन त्रिशूल बनावें और चार पहिया (चक्के) हों; तीन रेखा में लगी हों अर्थात् गाड़ी से बैलों को जोतने के स्थान तक तीन लकड़ी लगी हो। सूर्य का नक्षत्र मध्य के शूलाग्र में रखना वहां से सव्य मार्ग से तीन तीन नक्षत्र प्रत्येक स्थानों में रखना इस प्रकार



२८ नक्षत्रों को रखना। जहां महारथी का नक्षत्र हो उससे शुभ-अशुभ फल को कहे। शूलाग्र में नक्षत्र हो तो विजय और तीन नाड़ियों में हो तो सन्धि होती है ॥ १-३ ॥

इति रथचक्रम् ।

## अथ व्यूहचक्रम्

व्यूहचक्रं तथाष्टारं वृत्ताकारं त्रिनाडिकम्।
दंडं चतुष्टयं बाह्ये कर्तव्यं च चतुर्दिशि ॥ १ ॥
पूर्वदंडाग्रतो न्यस्य भानुभाद्यं भमण्डलम्।
प्रवेशे निर्गमे चैव त्रीणि त्रीणि प्रदक्षिणम् ॥ २ ॥
शशिसंज्ञाष्टकं मध्ये तद्वाह्ये भानुसंज्ञकम्।
तृतीये राहुसंज्ञं च केतुर्दण्डचतुष्टये ॥ ३ ॥
चद्रर्क्षे विजय लाभः सूर्यागे मध्यमं फलम्।
राहुऋक्षाष्टके विघ्नं मृत्युः केतुचतुष्टये ॥ ४ ॥
एवमुक्तचतुःस्थाने यद्दिने यस्य नामभम्।
तद्दिने तत्फलं तस्य सर्वकार्येषु सर्वदा ॥ ५ ॥

इति यामलीय-स्वरोदये व्यूहचक्रम्

व्यूहचक्रमिति। स्पष्टम् ॥ १–५ ॥

व्यूहचक्रम्




आठ रेखा से युक्त वृत्त के आकार का तीन नाडियों से युक्त चार दंड चारों दिशा में बाहर करना। पूर्व दिशा के दण्डाग्र से सूर्य के नक्षत्र से नक्षत्रों को लिखना चाहिये। प्रवेश और निर्गम में ३ तीन ३ नक्षत्र प्रदक्षिण क्रम से लिखे। मध्य

के ८ नक्षत्र चन्द्रसंज्ञक, उसके बाहर के ८ नक्षत्र सूर्यसंज्ञक हैं, तीसरे चक्र के ८ नक्षत्र राहुसंज्ञक और चारों दण्ड के ४ नक्षत्र केतुसंज्ञक हैं। चन्द्र के नक्षत्र में विजय और लाभ, सूर्य के नक्षत्र में मध्यम फल, राहु के ८ नक्षत्रों में विघ्न और केतु के नक्षत्रों में मृत्यु होती है। इस प्रकार चारों स्थानों में कहे हुए नक्षत्रों में जिस दिन जिसके नाम का नक्षत्र जहाँ हो उस दिन उस फल को सभी कार्यों में कहना ॥ १–५ ॥

इति व्यूहचक्रम्।

## अथ कुंतचक्रम्

कुंताकारं लिखेच्चक्रं मूलदंडशिखान्वितम्।
दिनभादि समारभ्य कर्तव्यं नवकत्रयम् ॥ १ ॥
नामभं नवके यत्र तत्र ज्ञेयं शुभाशुभम्।
मूले मृत्युर्जयं दंडे शेषर्क्षे तुल्यता रणे ॥ २ ॥
प्रभुभं यत्र नवके तत्र क्रूरैः फलं वदेत्।
मूले मृत्युर्जयो दंडे शिखायां संगरो भवेत्।
दंडयुद्धेषु सर्वेषु कुंतचक्रं विचिन्तयेद् बुधः ॥ ३ ॥

इति कुंतचक्रम्

कुन्ताकारमिति। स्पष्टम् ॥ १–३ ॥

कुन्तचक्रम्

कुन्त ( भाला ) के आकार का एक चक्र मूल दण्ड और शिखा से युक्त बनावे।




दिन के नक्षत्र से नौ नौ नक्षत्र तीनों स्थानों में कल्पना करे। जहाँ जिस नवक में नाम का नक्षत्र हो उससे शुभ अशुभ फल को कहे। मूल में हो तो विजय, दण्ड में हो तो विजय और शेष नवक में हो तो रण में समता होती है। स्वामी का नक्षत्र जिस नवक में हो उससे दण्डयुद्ध में फल का विचार करे। मूल में हो तो मृत्यु, दण्ड में हो तो विजय, शिखा में हो तो संग्राम होता है ॥ १–३ ॥

इति कुन्तचक्रम्।

अथ खड्गचक्रम्

खड्गचक्रं लिखेदादौ नवभेदसमन्वितम् ।
योधधिष्ण्यं समारभ्य त्रीणि त्रीणि लिखेद् बुधः ॥ १ ॥
यवं वज्रं तथा मुष्टिः पालिका यंधधारयोः ।
खड्गं तीक्ष्णं विजानीयान्नवाङ्गानि विभेदतः ॥ २ ॥
यवादौ यत्र यंधान्ता जायंते क्रूरखेचराः ।
मृत्युर्भंगो भयं युद्धे सौम्यैर्लाभो जयस्तथा ॥ ३ ॥
खड्गे धाराद्वये तीक्ष्णे क्रूरैर्जयति संगरे ।
सौम्यैर्यत्र भवेद्भंगो मिश्रैर्मिश्रफलं ततः ॥ ४ ॥

इति खड्गचक्रम्

खड्गचक्रमिति । स्पष्टम् ॥ १–४ ॥

खड्गचक्रम्

नव अंगों से युक्त पहले खड्गचक्र को बनाकर योधा के नक्षत्र से तीन-तीन नक्षत्र लिखे । यव, वज्र, मुष्टि, पालिका, यंध, दो धार, खड्ग, तीक्ष्ण ये ही नव अंग हैं । यव से यंध पर्यन्त के नक्षत्रों में क्रूरग्रह हों तो मृत्यु, भंग और भय युद्ध में होता




है, शुभग्रह हों तो लाभ और जय होता है । खड्ग के दोनों धाराओं में तथा तीक्ष्ण अंग में क्रूरग्रह हों तो संग्राम में विजय, जहां शुभग्रह हों वहां हानि और मिश्रग्रह से मिश्रित फल कहना चाहिये ॥ १-४ ॥

इति खड्गचक्रम् ।

अथ छुरिकाचक्रम्

यथा खड्गं तथा विद्याच्छुरिका तत्र निर्णयम् ।
क्रूरसौम्यविभागेन योधधिष्ण्यानि विन्यसेत् ॥ १ ॥

इति छुरिकाचक्रम्

यथेति । सुगमम् ॥ १ ॥

## छुरिकाचक्रम्

जैसा नक्षत्रचक्र में वैसा ही छुरिका में भी है। योद्धा के नक्षत्र से नक्षत्रों का न्यास कर क्रूर सौम्य के विभाग से फल को जाने ॥ १ ॥




इति छुरिकाचक्रम् ।

## अथ चापचक्रम्

चापचक्रं समालिख्य गुणबाणसमन्वितम् ।
शशिनक्षत्रतो भानि त्रीणि त्रीणि समालिखेत् ॥ १ ॥
त्रीणि बाणस्य मूले तु मध्ये मूर्ध्नि क्रमात्तथा ।
चापस्य मूलमध्योर्ध्वे त्रीणि त्रीणि तथा पुनः ॥ २ ॥
गुणे तु त्रीणि त्रीण्येव योधनक्षत्रतः फलम् ।
शरमूले भवेन्मृत्युर्मध्ये व्याधिः फले जयः ॥ ३ ॥
गुणमध्ये भवेद्भंगश्चापमध्ये धनक्षयः ।
चापोर्ध्वे विजयो ज्ञेयो गुणोर्ध्वे लाभसंयुतः ॥ ४ ॥
चापाधो विग्रहो मृत्युर्गुणाधोपि तथा फलम् ।
पापग्रहयुते नेष्टं विशेषेण तु नान्यथा ॥ ५ ॥
सौम्ययोगे जयं लाभं चापचक्रे समादिशेत् ।
शुभपापसमायोगे बलाधिकफलं स्फुटम् ॥ ६ ॥

इति चापचक्रम्

चापचक्रमिति—गुणबाणसमन्वितं चापचक्रं समालिख्य । शशिनक्षत्रात् त्रीणि त्रीणि भानि समालिखेत् । त्रीणीति । प्रथमतो बाणमूलाद्गणना बाणस्य मूले यत्र धनुर्गुणसंयोगस्तत्र त्रीणि नक्षत्राणि, बाणमध्ये त्रीणि उपरि फलाग्रे त्रीणि एवं बाणे नव नक्षत्राणि न्यस्यानि । तत्र चापस्य मूले मध्ये ऊर्ध्वे च प्रत्येकं त्रीणि त्रीणि न्यसेत् । गुणे इति । तत्र गुणे सौम्ये त्रीणि त्रीणि नक्षत्राणि लिखेत् । तत्र योधनक्षत्रस्थित्या फलं भवति । अयमभिप्रायः—बाणस्याग्रे दिनक्षत्र त्रीणि भानि तत्र योधनक्षत्रमवलोकयेत् । तदग्रे त्रीणि मध्ये तत्रापि योधनक्षत्रं वर्तते न वा ततोऽग्रमाने त्रीणि एवं नव भानि दिननक्षत्रं ततो

दशमनक्षत्रात्त्रीणि त्रीणि कृत्वा धनुर्मूले मध्ये कोटौ च तत्र योधनक्षत्र विचारयेत्। तत एकोनविंशतिनक्षत्रात् मौर्वीमूले त्रीणि, मध्ये त्रीणि, अते धनुर्लग्नमौर्व्यो त्रीणि तत्र योधनक्षत्र विचारयेत्। शरमूले इति। दिनर्क्षत त्रिपु नक्षत्रेपु यदि योधभ तदा धनुपा न युद्धेत मृत्युभयात्। अन्यत् स्पष्टम् ॥१-३॥

चापचक्रम्

गुण ( रज्जु ) और बाण से युक्त धनुप चक्र को बनाकर उसम ही चन्द्रमा के नक्षत्र ( दिननक्षत्र ) से तीन तीन नक्षत्र लिखे। बाण के मूल म ३ नक्षत्र, मध्य में




३ नक्षत्र, और आखीर (बाण के नोक) म ३ नक्षत्र इस प्रकार नव नक्षत्र बाण म न्यास करे। दशम नक्षत्र से ३ नक्षत्र धनुप के मूल में, ३ नक्षत्र मध्य में और ३ नक्षत्र ऊर्ध्व भाग में न्यास करे। इसके बाद १९ वें नक्षत्र से तीन नक्षत्र मौर्विका के आदि में, पुन ३ नक्षत्र मध्य में और ३ नक्षत्र ऊर्ध्व भाग में न्यास करे। इसके बाद देखना चाहिये कि योधा का नक्षत्र कहा किस अग में है उससे फल को विचारे। बाण के मूल में योधा का नक्षत्र हो तो बाण युद्ध से योद्धा की मृत्यु होती है। मध्य म हो तो व्याधि और फलक में हो तो विजय होती है। इसी प्रकार रज्जु के मध्य में वा धनु के मध्य में हो तो धन का नाश, चाप के ऊर्ध्व भाग में हो तो विजय और रज्जु के ऊर्ध्व भाग में हो तो धन का लाभ होता है। धनुप या रज्जु के अधःभाग में हो तो विग्रह होता है। विशेष कर पापग्रह से युत नक्षत्र हो तो अशुभ फल होता है अन्यथा नहीं होता है। शुभग्रह के योग म विजय और लाभ होता है शुभ,पाप दोनों की युति हो तो जो बली हो उसका फल चापचक्र में कहना ॥ १-३ ॥

इति चापचक्रम्।

अथाग्निचक्रम्

अथातः संप्रवक्ष्यामि अग्निचक्र वरानने।
होमे च शांतिके चैव चिंतनीयं प्रयत्नतः ॥ १ ॥
सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः।
सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले च ॥२॥
त्रीणि त्रीणि भवेदृक्षे सूर्यनक्षत्रानुक्रमात्।
आदित्ये च भवेच्छोक बुधे चैव श्रिया सुखम् ॥ ३ ॥

शुक्रे चैवार्थलाभश्च शनौ पीडा न संशयः ।
चन्द्रे लाभं विजानीयाद्भौमे च निधनं भवेत् ॥ ४ ॥
गुरौ चैवार्थलाभश्च राहौ हानिश्च निश्चितम् ।
केतौ चैव भवेन्मृत्युरग्निचक्रं वरानने ॥ ५ ॥
रविभं दीयते पूर्वं गण्यते सृष्टिमार्गतः ।
शुभाशुभफलं वक्ष्ये अग्निचक्रं सदा बुधैः ॥ ६ ॥

इत्यग्निचक्रम्

अग्निचक्र

अब मैं अग्निचक्र को कहता हूँ जिसे शांति के लिये किये हुये हवन में विचारना चाहिये। वर्तमान तिथि में १ जोड़ कर वार-संख्या को जोड़कर उसमें चार का भाग दे यदि ३ या ० शेष बचे तो अग्नि का वास भूमि में होता है उस दिन हवन करने से सुख होता है और एक, दो शेष बचे तो क्रम से आकाश और भूतल पर अग्नि वास होता है उस दिन हवन करने से प्राण और धन का नाश होता है। सूर्य के नक्षत्र से तीन तीन नक्षत्र अभीष्ट दिन के नक्षत्र तक गिने उसमें पहले ३ नक्षत्र के स्वामी सूर्य हैं इसमें हवन करने से शोक, फिर ३ नक्षत्र बुध का इसमें हवन करने से लक्ष्मी और सुख का लाभ, फिर ३ नक्षत्र के स्वामी शुक्र हैं इसमें हवन करने से धन का लाभ, फिर ३ नक्षत्र शनि के हैं इसमें हवन करने से पीड़ा होती है, फिर ३ नक्षत्र चन्द्रमा के हैं इसमें हवन करने से लाभ, फिर ३ नक्षत्र भौम का है इसमें हवन करने से मृत्यु होती है। फिर ३ नक्षत्र गुरु का है इसमें हवन करने से द्रव्य का लाभ, फिर ३ नक्षत्र राहु का है इसमें हवन करने से हानि, फिर तीन नक्षत्र केतु का है इसमें हवन करने से मृत्यु होती है। इस प्रकार सूर्य के नक्षत्र से सृष्टिमार्ग से अग्निचक्र द्वारा शुभ अशुभ फल कहा गया है ॥ १-६ ॥

इति अग्निचक्रम्

अथ शनिचक्रम्

शनिचक्रं नराकारं लिखित्वा सौरिभादितः ।
नामर्क्षं भवेद्यत्र ज्ञेयं तत्र शुभाशुभम् ॥ १ ॥
मुखैकं दक्षदोस्तुर्यं पद्पादौ पंच हृत्करे ।
वामे तुर्यं त्रयं शीर्षे नेत्रे गुह्ये द्विकं द्विकम् ॥ २ ॥
मुखे हानिर्जयो दक्षे भ्रमः पादे श्रियो हृदि ।
वामे शीर्षे भयं राज्यं नेत्रे सौख्यं मृतिर्गुदे ॥ ३ ॥

तुर्याष्टद्वादशो पक्षे यदा विघ्नकरः शनिः।
तदा सौख्यं वपुःस्थाने हृच्छीर्षे नेत्रदक्षयोः ॥ ४ ॥
तृतीयैकादशे षष्ठे यदा सौख्यकरः शनिः।
तदा विघ्नं शरीरस्थे मुखगुह्याघ्रिवामदोः ॥ ५ ॥
यस्य पीडाकरः सौरिस्तस्य चक्रमिदं स्फुटम्।
लिखित्वा कृष्णद्रव्येण तैलमध्ये क्षिपेद् बुधः ॥ ६ ॥
निक्षिप्य भूमिमध्यस्थे कृष्णपुष्पैः प्रपूजयेत्।
तुष्टिं याति न संदेहः पीडां मुक्त्वा शनैश्चरः ॥ ७ ॥
यथोक्त यामले तंत्रे सूनोः सूर्यस्य पूजनम्।
यथोक्तविधिना सर्वं कर्तव्यं मंत्रपूजनम् ॥ ८ ॥
जपेत्प्रतिदिनं मंत्रं संख्ययाष्टोत्तरं शतम्।
पूजयित्वा विधानेन ततः शांति प्रयच्छति ॥ ९ ॥

इति शनिचक्रम्

शनिचक्रमिति। नराकार शनिचक्र लिखेत्। तत्र शन्यधिष्ठितनक्षत्रत न्यास कारयेत। यत्र भागे नामनक्षत्र भवेत्तत्र शुभाशुभ फल भवति। मुखेकमिति। तत्र मुखे एक नक्षत्र, ततो दक्षदोर्दक्षिणबाहौ चत्वारि नक्षत्राणि, पादौ चरणयो त्रीणि त्रीणि एव षट्, प्रथम दक्षिणचरणे ततो वामचरणे, पञ्चहृत् पञ्चनक्षत्राणि हृदये इत्यर्थ। वामे करे वामहस्ते चतुष्टय, शीर्षे शिरसि त्रय, नेत्रे द्विक, गुह्ये द्विक एव सर्वत्र नक्षत्रन्यास कृत्वा फल विचारयेत्। मुखे हानिरिति। मुखे नामनक्षत्रस्थिते हानि, दक्षे हस्ते जय। पादे भ्रमो भ्रमणम्। हृदि शोर्भवति वामे हस्ते भयम्। शीर्षे राज्यम्। नेत्रे सौख्यम्। गुह्ये मृति मरणम्। तुर्येति। यदा जन्मराशित चतुर्थे द्वादशेऽष्टमे द्वितीये राशौ शनि तदा चेच्छनिनक्षत्रत नामनक्षत्र हृच्छीर्षनेत्रदक्षभुजेषु पतति तदा चतुर्थाष्टमद्वादशद्वितीयस्थानज शनिकृत दुष्टफल बाधित्वा शुभफलदायको भवति। तृतीयैकादश इति। एव यदा जन्मराशित तृतीयैकादशे षष्ठे शनि सौख्यकरस्तस्मिन् समये शनिनक्षत्रात नामनक्षत्र चेन्मुखगुह्याघ्रिवामदोर्मध्ये पतति तदा तृतीयैकादशादिशुभफल बाधित्वा विघ्नमेव सर्वत्र ददाति ॥ ४-९ ॥

शनिचक्रम्

मनुष्य के आकार का शनिचक्र बनाकर उसमें शनि के नक्षत्र से नक्षत्रों को लिखकर जहाँ नाम का नक्षत्र हो उससे शुभ अशुभ फल का विचार करे। एक

सामने दीखता है। जिसके वामांग में चन्द्रग्रह और शुभग्रह दक्षिण हों तो उस योद्धा की हार निश्चय ही युद्ध में होती है चाहे वह महाशूर-वीर ही क्यों न हो ॥ १-१७ ॥

विशेष—यहाँ युद्धलग्न में जो ग्रह हो उसकी पूर्वदिशा, दूसरे, तीसरे में ईशान कोण। चौथे में उत्तर, पांचवें, छठे में वायव्य कोण। सातवें में पश्चिम, आठवें में नैर्ऋत्य कोण, दशम में दक्षिण और एकादश, द्वादश में अग्नि कोण समझना चाहिये।

इति घातनरचक्रम्

## अथ डिम्भचक्रम्

डिम्भचक्रे न्यसेद्भानि भानुभात्त्रि मस्तके।
मुखे त्रीणि द्वय स्कंधे एकैक बाहुहस्तयोः ॥ १ ॥
पंच हृन्नाभिगुह्येषु एकैकं षट् च जानुनि।
चरणाभ्यां तथैकैक जन्मभं यत्र तत्फलम् ॥ २ ॥
शीर्षस्थे छत्रलाभश्च वक्त्रे मिष्टान्नभोजनम्।
स्कंधे धनी च बाहुभ्यां स्थानभ्रष्टो भवेन्नरः ॥ ३ ॥
पाणिभ्यां तस्करो लक्ष्मीर्हृद्यल्पायुश्च नाभिभे।
गुह्ये कामी भ्रमो जानौ स्तोकजीवी च पादयोः ॥ ४ ॥

इति डिम्भचक्रम्

डिम्भचक्रे इति। स्पष्टम् ॥ १-४ ॥

अथ डिम्भचक्रम्

डिम्भचक्र में सूर्य के नक्षत्र से ३ नक्षत्र मस्तक पर, ३ नक्षत्र मुख में इसके बाद २ नक्षत्र कंधे पर, एक एक नक्षत्र भुजा और हाथ में। पांच नक्षत्र हृदय में, नाभि और गुह्य स्थान में एक-एक नक्षत्र, ६ नक्षत्र जांघों में, चरणों में एक एक नक्षत्र स्थापित करे। यहां जन्मनक्षत्र हो वहां से फल कहे। सिर में जन्म नक्षत्र हो तो छत्रलाभ, मुख में हो तो मिष्टान्न भोजन, कंधे में हो तो धनी, बाहुओं में हो तो स्थान से भ्रष्ट हो। दोनों हाथों में हो तो चोर, हृदय में हो तो लक्ष्मी का लाभ, नाभि में हो तो अल्पायु, गुह्यस्थान में हो तो कामी, जांघों में हो तो भ्रमण, दोनों पैरों में हो तो अल्पायु होता है ॥ १-४ ॥



इति डिम्भचक्रम्

## अथ पक्षिचक्रम्

चञ्चुमस्तककण्ठेषु हृदयोदरपत्सु च ।
पक्षयोश्च त्रिकं चैव शशिभाद्विन्यसेद् बुधः ॥ १ ॥
चञ्चुस्थे नामभे मृत्युः शीर्षे कण्ठोदरे हृदि ।
विजयः क्षेमलाभश्च भगदं पादपक्षयोः ॥ २ ॥

इति पक्षिचक्रम्

चञ्चुमस्तक इति । सुगमम् ॥ १–२ ॥

पक्षिचक्रम्

चन्द्रमा के नक्षत्र से पक्षी के चोंच, मस्तक, कंठ हृदय, पेट, पैर और दोनों पक्षों ( पखों ) में तीन ३ नक्षत्र को देवै । यदि चोंच में नाम का नक्षत्र हो तो मृत्यु, शिर, कंठ, पेट, हृदय में हो तो विजय, कुशल और लाभ होता है, पैर और पक्ष में हो तो हानि होती है ॥ १–२ ॥



इति पक्षिचक्रम्

## अथ वर्गचक्रम्

अगरुडः कमार्जारश्चः सिंहष्टः शुनीसुतः ।
तः सर्पो मूषकः पश्च यो मृगः शस्त्वजात्मजः ॥ १ ॥
वसु ८ भूत ५ रसा ६ वेदा ४ मुनि ७ चन्द्रा १ त्रि ३ याग्वः ।
पूर्वादिक्रमतो ज्ञेया वर्गोपरि दिगष्टके ॥ २ ॥
नाम्नि वर्गादिवर्णानामङ्काः कार्याः पृथक्पृथक् ।
पिण्डिता वसुभिर्भक्ता शेषमायो ध्वजादिकः ॥ ३ ॥
शेषसंख्या ध्वजो धूमः सिंहश्वावृषरासभाः ।
गजध्वांक्षौ क्रमेणैव आया अष्टौ भवन्ति ते ॥ ४ ॥
ध्वांक्षश्वरासभवृषगजसिंहध्वजानलाः ।
यथोत्तरबलाः सर्वे ज्ञातव्याः स्वरपारगैः ॥ ५ ॥

प्रभौ योधे पुरे देशे मित्रनारीगृहेषु च।
आयाधिके भवेल्लाभो न लाभो बलवर्जिते ॥ ६ ॥

इति वर्गचक्रम्

अगरुड। इति। स्पष्टम् ॥ ६ ॥

वर्गचक्रम्

अवर्ग के गरुड़, कवर्ग के मार्जार, चवर्ग के सिंह, टवर्ग के श्वान, तवर्ग के सर्प, पवर्ग के मूषक, यवर्ग के मृग और शवर्ग के मेढा ये स्वामी हैं। पूर्वादि दिशाओं के क्रम से आठों वर्गों के ८।५।६।४।७।१।३।२ ये ध्रुवांक हैं। नाम के वर्ण और स्वरों के ध्रुवांकों को एकत्र कर आठ से भाग देने से शेष ध्वजादि आय होते हैं। ध्वज, धूम, सिंह, श्वान, वृष, रासभ, गज, ध्वांक्ष ये आठ आय हैं। ध्वांक्ष, श्वान, रासभ, वृष, गज, सिंह, ध्वज और धूम ये यथोत्तर बली हैं। प्रभु, योधा, पुर, देश, मित्र, स्त्री, गृह के विचार में जिसका आय अधिक हो उससे उसको लाभ होता है। जैसे देवदत्त को हरेराम से लाभ होगा या नहीं?

| | | |
|---|---|---|
| श० २ [illegible] ध्वांक्ष | अ ८ गरुड़ ध्वज | क० ५ मार्जार धूम |
| य० ३ मृग गज | | च ६ सिंह सिंह |
| प० १ मूषक रासभ | त ७ सर्प वृष | ट० ४ श्वान श्वान |

देवदत्त के क्रम से ७+३+०+७+७स्वरोंका+१२=१३ इसमें ८ से भाग देने से शेष ७ बचा। इसी प्रकार हरेराम में क्रम से २+३+३+१ स्वरों का +१२=४१ इसमें आठ से भाग देने से शेष १ बचा अतः हरेराम को देवदत्त से लाभ होगा न कि देवदत्त को ॥ १-६ ॥

इति वर्गचक्रम्

अथ आयचक्रम्

ध्वजो धूमोथ सिंहः श्वा सौरभेयः खरो गजः।
ध्वांक्षश्चेति क्रमेणैव आया अष्टौ दिगष्टके ॥ १ ॥
प्रतिपदाद्युदीयन्ते तिथिभुक्तिप्रमाणतः।
अहोरात्रे पुनः सर्वे यामभुक्त्या भ्रमन्ति च ॥ २ ॥
आया वर्गाष्टके ज्ञेया दिगष्टकक्रमेण च।
स्वोदये नृत्युद ज्ञेयं सर्वकार्येषु सर्वदा ॥ ३ ॥

ध्वजेति। स्पष्टम्। प्रतिपदेति। प्रतिपदादितिथौ तिथिभुक्तिप्रमाणतो

ध्वजादयो आया उदीयन्ते यथा प्रतिपदि ध्वजोदय । द्वितीयाया धूमस्य । तृतीयाया सिंहस्य । चतुर्थ्यां शुन । पञ्चम्या वृषस्य । षष्ठ्या खरस्य । अष्टम्या ध्वाक्षस्य उदयो एव पुनरग्रेऽपि उद्यन्ति । तु पुन सर्वे ध्वजादयोऽहोरात्रमध्ये यामभुक्त्या भ्रमन्ति । यस्मिंस्तिथौ यस्योदयस्तमुपक्रम्याष्टप्रहरेऽष्टयाम प्रतिप्रहर प्रत्येकस्योदय । यथा प्रतिपदि प्रथमप्रहरे ध्वज । द्वितीयप्रहरे धूम्र । तृतीयप्रहरे सिंह । चतुर्थप्रहरे श्वा । पञ्चमप्रहरे वृष । षष्ठप्रहरे खर । सप्तमप्रहरे गज । अष्टमप्रहरे ध्वाक्ष उदेति । एव द्वितीयाया प्रथमप्रहरे धूम्र । द्वितीयप्रहर सिंह । एव क्रमेण सर्वास्वपि तिथिषु अनुस्मरणीयम् ॥ १–३ ॥

इत्यायचक्रम्

आठों दिशाओं में क्रम से ध्वज, धूम सिंह, श्वान, वृष, खर, गज और ध्वांक्ष ये आठ आय हैं। ये प्रतिपदादि तिथियों में क्रम से उदित होते हैं। और तिथि भोग के अनुसार अहोरात्र में उदित होते हैं। जैसे प्रतिपदा के प्रथम प्रहर में ध्वज, २ रे में धूम, ३ रे में सिंह, ४ थे में श्वान, ५ वें में वृष, ६ ठे में खर, ७ वें में गज और और आठवें प्रहर में ध्वांक्ष उदित होता है। एव अन्य तिथियों में भी समझना। आठवर्ग जो आठों दिशा में हैं उसी के साथ आय भी हैं। जिस दिशा में आय उदित हो उसी दिशा में उसके वर्ग को भी उदित समझना। जिस दिशा में अपना वर्ग और आय उदित हो उस दिशा में अपने सभी कार्य न करें ॥ १–३ ॥

| | | |
|---|---|---|
| ध्वांक्ष ८।३० | ध्वज १।९ | धूम २।१० |
| गज ७।१५ | | सिंह ३।११ |
| खर ६।१४ | वृष ५।१३ | श्वा ४।१२ |

इति इत्यायचक्रम्

## अथ ग्रामचक्रम्

ग्रामनक्षत्रमारभ्य कर्तुर्नक्षत्रं गण्यते ।
शिरःपञ्चार्थलाभं च मुखे त्रीण्यर्थनाशनम् ॥ १ ॥
याणा हृदि धनं धान्यं द्वौ पादौ षड् दरिद्रता ।
द्वौ गुह्ये भय पीडा नाभौ चत्वारि सम्पदम् ॥ २ ॥
पृष्ठैक प्राणसन्देहो हस्ते चैकैकलाभदम् ।
जन्मराशिस्थितो ग्रामस्त्रिपट्सप्तमगोपि वा ॥ ३ ॥
सिद्धार्थाश्च विनश्यन्ति आपत्य च दिनेदिने ॥ ४ ॥

चतुर्थश्चाष्टमो यश्च द्वितीयो वा यदा भवेत् ।
तत्र चोत्पद्यते द्रव्यं यत्र चैवं विनिर्दिशेत् ॥ ५ ॥
पञ्चमो नवमो ग्रामो द्वादशैकादशे दशे ।
महालाभो भवेत्तस्य प्रभवेच्च चिरायुषम् ॥ ६ ॥
अन्यच्च ।
पञ्चमो नवमो ग्रामो दशमैकादशस्थितः ।
द्वितीये वसते नित्यं धनधान्यसमन्वितम् ॥ ७ ॥
चतुर्थश्चाष्टमो ग्रामो द्वादशोपि यदा भवेत् ।
तत्र चोपार्जितं द्रव्यं तत्रैवापि विनश्यति ॥ ८ ॥

इति ग्रामचक्रम्

ग्राम के नक्षत्र से गृहकर्ता के नक्षत्र तक गिन कर क्रम से पाँच नक्षत्र शिर में स्थापित करे उसमें यदि वासकर्ता का नक्षत्र हो तो धन का लाभ। इसके बाद तीन नक्षत्र मुख में स्थापित करे इसमें धन का नाश होता है। इसके बाद पाँच नक्षत्र हृदय में रखे। इसमें धन धान्य का लाभ। दोनों पैरों में छः नक्षत्र स्थापित करे। इसमें वासकर्ता का नक्षत्र होने से दरिद्रता, इसके बाद दो नक्षत्र गुह्य स्थान में स्थापित करे। इसमें भय और पीड़ा होती है। इसके बाद चार नक्षत्र नाभि में स्थापित करे। इसमें सम्पत्ति का लाभ होता है। इसके बाद एक नक्षत्र पीठ में स्थापित करे। इसमें प्राण का सङ्कट होता है। इसके बाद दोनों हाथों में एक एक नक्षत्र स्थापित करे। इसमें लाभ होता है। यदि जन्मराशि से ग्राम की राशि दो अथवा ६, १० वीं राशि हो तो अपने अभीष्ट नाश हो जाते हैं और चञ्चलता दिन दिन बढ़ती जाती है। यदि ग्राम की राशि ४।८।१२ हो तो निरन्तर द्रव्य का लाभ होता है। ५।९।१।११।१० हो तो अत्यन्त लाभ और आयुष्य की वृद्धि होती है। मतान्तर से—जन्मराशि से ५।९।१०।११।२ हो तो मनुष्य धन धान्य से परिपूर्ण होकर वास करता है। यदि ४।८।१२ हो तो उत्पन्न किया हुआ द्रव्य वहीं नाश हो जाता है ॥ १–८ ॥

अथ पट्टचक्रम्

अथातः सम्प्रवक्ष्यामि विवाहे शोधयेद्बुधः ।
रवितारादिगणयन्तं चन्द्रमादि च यो न्यसेत् ॥ १ ॥
त्रीणि त्रीणि क्रमेणैव फलं तस्य शुभाशुभम् ।
मध्ये मृत्युस्तथा लक्ष्मीर्विविधिं तथैव च ॥

सौभाग्यं विधवा वन्ध्या धन पुत्रः क्रमेण च ॥ २ ॥
त्रिऋक्षमर्कादिकुलक्षयं च पूर्वार्धलक्ष्मीर्मृतिदुर्बलत्वम् ।
सौभाग्यवन्ध्या विधवा च नारी पुत्रप्रसूतिर्धनपट्टकाले ॥

इति विवाहपट्टचक्रम्

विवाह में पट्टचक्र को कह रहे हैं—सूर्य के नक्षत्र से चन्द्रनक्षत्र तक गिने। क्रम से तीन तीन नक्षत्रों का शुभ अशुभफल होता है। शेष स्पष्ट ही है ॥ १–३ ॥

## अथ विरंचिचक्रम्

अथातः सम्प्रवक्ष्यामि सद्यः प्रत्ययकारकम् ।
विरंचिनाम-विख्यातं यत्सुरैरपि दुर्लभम् ॥ १ ॥
कृत्तिका चोत्तराफाल्गुन्युत्तराषाढपूर्वकम् ।
पंक्तियुक्त्या लिखेद्भानि क्रमेण नवकत्रये ॥ २ ॥
वेधोपि कर्णगस्तत्र कर्तव्यो नवकत्रये ।
क्रूरसौम्यग्रहैर्विद्धं ज्ञेयं तस्य शुभाशुभम् ॥ ३ ॥
जन्म सम्पद्विपत्क्षेमप्रत्यरिः साधको वधः ।
मैत्रातिमैत्रगास्तारा नवभेदा भवन्ति च ॥ ४ ॥
जन्मत्रयस्य वेधेन मृत्युः क्रूरग्रहेण च ।
जय लाभ शुभैस्तत्र मिश्रैर्मिश्रफले विदुः ॥ ५ ॥
जन्मत्रये स्थितः सौरिः क्षेमभे राहुभूमिजौ ।
मित्रातिमित्रगे सूर्ये जायते वधबन्धनम् ॥ ६ ॥
जन्मत्रये यदा जीवः क्षेमभे बुधभार्गवौ ।
मित्रातिमित्रगे चन्द्रे जय लाभं सुखानि च ॥ ७ ॥
त्रिपञ्चसप्ततारासु रोगोत्पत्तिर्यदा तदा ।
चिररोगो मृतिस्तासु क्रूरविद्धासु जायते ॥ ८ ॥

इति विरञ्चिचक्रम्

अथात इति । स्पष्टम् । जन्मत्रयस्येति । जन्मदशमैकोनविंशभम् एतज्जन्मत्रय भं यदि क्रूरग्रहेण विद्धं तदा मृत्युरत् स्पष्टम् ।

अन्यत् स्पष्टम् ॥ १–८ ॥

विरचि चक्र को कहता हूँ जो कि प्रसिद्ध और देवताओं को भी दुर्लभ है। कृत्तिका, उत्तराफाल्गुनी, उत्तराषाढ को एक पंक्ति में लिखे। दूसरे बाद क्रम से नव २ नक्षत्र एक एक पंक्ति में लिखे। तीनों नक्षत्र में तिरछे तिरछे वेध का विचार करना चाहिये। क्रूरग्रह तथा शुभग्रह के वेध से शुभ अशुभ फल को कहना। इसमें जन्म, सम्पत्, विपत्, क्षेम, प्रत्यरि, साधक, वध, मैत्र, अतिमैत्र ये नव तारायें होती हैं। तीनों आवृत्ति में जन्म की तारा अर्थात् जन्मनक्षत्र और उससे १० वें नक्षत्र में क्रूरग्रह हो तो मृत्यु के समान कष्ट, शुभग्रह हो तो विजय और लाभ, मिश्र ग्रह हों तो मिश्र फल कहना। तीनों आवृत्ति में जन्म की तारा में शनि हो, क्षेम तारा में राहु भौम हो, मित्र अतिमित्र में सूर्य हों तो वध और बन्धन दोनों होता है। तीनों जन्म तारा में गुरु हो, क्षेमतारा में बुध शुक्र हों मित्र या अतिमित्र में चन्द्रमा हो तो विजय लाभ और सुख होता है। यदि तीसरी, पांचवीं या सातवीं तारा में रोग उत्पन्न हो तो अधिक दिन तक रोग रहता है, यदि क्रूर ग्रह से वेध हो तो मृत्यु होती है ॥ १–८ ॥



इति विरचिचक्रम्

## अथ भास्करचक्रम्

रेखात्रयं त्रिशूलाभं तिर्यग्रेखासमन्वितम् ।
एकैका कोणगा तत्र मध्याधो भानुभादितः ॥ १ ॥
लिखेत्सव्यक्रमेणैव चक्रे भास्वति तारकाः ।
अधस्त्रये भवेन्मृत्युश्चतुर्भिः कोणगैः शुभम् ।
द्वादशा मध्यमाः प्रोक्ता ऊर्ध्वगा भस्मकारकाः ॥ २ ॥

इति भास्करचक्रम्

त्रिशूल के समान तीन रेखा खड़ी और चार तिरछी रेखा लिखे उसमें सूर्य के नक्षत्र से एक-एक नक्षत्र कोण में और शेष मध्य और ऊपर नीचे स्थापित करे। नीचे वाले नक्षत्र में मृत्यु—कोणवाले नक्षत्र में शुभफल, ऊपर वाले नक्षत्र में मध्यम फल और ऊपर वाले नक्षत्र में अनिष्ट फल होता है ॥ १–२ ॥

## अथ श्येनचक्रम्

श्येनचक्रं समालिख्य पक्षिरूपं सुशोभनम् ।
चञ्चग्रे भानुभं कृत्वा अष्टाविंशति विन्यसेत् ॥ १ ॥

ऋक्षैकं चञ्चुकोटिस्थं शीर्षे ग्रीवे त्रिकं त्रिकम् ।
पादपृष्ठे चतुष्कं च उदरे नव भानि च ॥ २ ॥
नामऋक्षं स्थितं यस्य चंच्वग्रे वधबन्धनम् ।
लाभो हृच्छीर्षग्रीवासु विरुद्धं पादपृष्ठयोः ॥ ३ ॥

इति श्येनचक्रम्

पक्षि के आकार का श्येन चक्र को सुन्दर बनाकर सूर्य के नक्षत्र को चोंच के आगे लिखकर वहाँ से २८ नक्षत्रों को क्रम से लिखना। चोंच के आगे १ नक्षत्र इसके बाद शिर कंठ में तीन तीन नक्षत्र, पैर पीठ में चार चार नक्षत्र, पेट में ९ नक्षत्र। जिसके नाम का नक्षत्र चोंच के आगे हो उसका वध या बन्धन होता है। हृदय, शिर, ग्रीवा में हो तो लाभ, पैर और पीठ में हो तो विरुद्ध फल होता है ॥ १–३ ॥



इति श्येनचक्रम्

अथ संवत्सरचक्रम्

चक्रं सांवत्सरं वक्ष्ये यदुक्तं कौशलागमे ।
येन विज्ञायते सम्यग्वर्षे वर्षे शुभाशुभम् ॥ १ ॥
द्वादशारं लिखेच्चक्रं तत्र मेषादिराशयः ।
संस्थाप्याः क्रमयोगेन मीनान्ताः सव्यमार्गगाः ॥ २ ॥
तत्र चक्रं समालेख्य मेषादिराशिमार्गतः ।
प्रभवाद्यब्दमेकैकं षष्टिः पञ्चप्रवर्त्तनैः ॥ ३ ॥
एवं राशौ स्थितं यत्र वत्सरं वर्तमानजम् ।
तद्राशिस्थ फलं वीक्ष्य यत्किंचिद्वार्षिकं मतम् ॥ ४ ॥
चैत्रे या प्रतिपच्छुक्ला तस्याः काले प्रवेशजे ।
एतद्विलोकयेच्चक्रं कालज्ञानविनिश्चितम् ॥ ५ ॥
तत्र सर्वान् ग्रहान्न्यस्य राशौ ये यत्र संस्थिताः ।
वर्षराशेर्विचिन्त्यास्ते रेखास्थानगता ग्रहाः ॥ ६ ॥

वर्षोपचयगाः क्रूराः सौम्याश्छिद्रान्त्यवर्जिताः ।
ग्रहा रेखाप्रदा ज्ञेया मितमध्यग्रहे स्थिताः ॥ ७ ॥
स्वर्क्षे द्विघ्नं फलं दत्ते स्वोच्चे त्रिघ्नं तथैव च ।
फलार्धं शत्रुगेहस्थो नीचस्थो निष्फलो ग्रहः ॥ ८ ॥
एव रेखाप्रमाणेन वर्षविशोपका मताः ।
ज्ञातव्या दैशिकेन्द्रेण वर्षमध्ये प्रयत्नतः ॥ ९ ॥
एवं वर्षफलं प्रोक्तं चैत्रमासाद्यवासरात् ।
आषाढे कार्त्तिकेप्येवं जलं धान्यं विचिन्तयेत् ॥ १० ॥
तत्र देशे पुरे ग्रामे फल भिन्न प्रदृश्यते ।
तस्मात्तत्कारणं वच्मि येन जानाति साधकः ॥ ११ ॥
देशादिराशिनाथस्य यो रेखादायको ग्रहः ।
मित्रोदासीनशत्रुत्वे फलं भिन्नं करोति सः ॥ १२ ॥
मित्रं द्विघ्नं फलं दत्ते समः सौम्यं करोति सः ।
शत्रुः सर्वहरो ज्ञेयः सर्वदा कालचिन्तकैः ॥ १३ ॥
एव विचार्य कर्तव्या कालविशोपका बुधैः ।
यथा जलं यथा धान्यं स्वस्वकाले विचिन्तयेत् ॥ १४ ॥

इति संवत्सरचक्रम्

जो कोष्ठात्मक में संवत्सर चक्र कहा गया है उसे मैं कह रहा हूँ। जिससे प्रत्येक वर्ष में शुभ अशुभ जाना जाता है। १२ कोठे के चक्र लिखकर उनमें मेष से मीन पर्यन्त मध्य भाग क्रम से राशियों को लिखे। उस चक्र में मेषादि राशि मार्ग से प्रभव आदि संवत्सर को पाँच परिक्रमा में लिखे। इस प्रकार जिस राशि में वर्तमान संवत्सर हो उस राशि के वर्तमान फल को देखकर वार्षिक फल को कहे। चैत्रशुक्ल प्रतिपद को वर्ष प्रवेश समय इस चक्र से ज्ञात करे। उस समय जो ग्रह जिस राशि पर हो उनको उस राशि पर लिखकर वर्ष की राशि से ग्रहों के फल का विचार करे। वर्ष राशि से उपचय स्थान ३।६।११ में क्रूरग्रह हों और ८।१२ को छोड़ कर शेष स्थान में शुभग्रह हों तो ग्रह रेखा प्रद होते हैं। यदि ग्रह अपनी राशि में हो तो दूना, अपने उच्च में हो तो तिगुना, शत्रुगृह में हो तो आधा फल देता है। अपने नीच राशि में हो तो निष्फल होता है। इस प्रकार से रेखा से वर्ष का विंशोपक ज्ञान होता है। यह वर्ष का फल चैत्र मास के आदि दिन से कहा गया

है। एवं आषाढ़ और कार्तिक में जल धान्य की सत्ता का विचार करना। इसमें देश, पुर, ग्राम में भिन्न भिन्न फल होता है इसका कारण कह रहा हूँ। देशादि राशिनाथ के जो रोगप्रद ग्रह हैं वे मित्र सम शत्रु आदि राशियों में होकर भिन्न फल




को देते हैं। मित्र दूना फल, समग्रह समान और शत्रुग्रह सभी फल का अपहरण कर लेता है। इस प्रकार से विचार कर कालविशेषक करना। जिससे जल और धान्य अपने अपने समय में विचारे जा सकें॥ १–१७॥

इति संवत्सरचक्रम्

## अथ स्थानबलचक्रम्

स्थानचक्रं प्रवक्ष्यामि यदुक्तं लक्ष्मपदागमे।
येन विज्ञायते सम्यक् स्थाने स्थाने शुभाशुभम्॥ १॥
स्थानपीडाप्रभावेण राज्ञः पीडा प्रजायते।
तस्मादपीडिते स्थाने स्थातव्यं सर्वदा नृपैः॥ २॥
स्थाननामोद्भवं राशिं कृत्वादौ द्वादशारके।
राशिमण्डलकं न्यस्य वाममार्गेण संस्थितम्॥ ३॥
नव तत्र ग्रहाः स्थाप्या मासचन्द्रश्च राशिगः।
तेषां विलोकनं वीक्ष्य स्थानराशिगतं तथा॥ ४॥

तृतीयैकादशे पादं द्विपादे व्योमबन्धुगे ।
त्रिकोणे त्र्यंघ्रि मूर्ध्न्यस्ते पूर्णं पश्यन्ति खेचराः ॥ ५ ॥
शन्यर्कराहुकेत्वाराः पञ्च क्रूरग्रहा मताः ।
शेषं चतुष्टयं सौम्यं मासेन्दुश्चापि पञ्चमः ॥ ६ ॥
एवं पञ्च ग्रहाः क्रूराः पञ्च सौम्यास्तथैव च ।
तेषां शुभाशुभां दृष्टिं कृत्वा स्थानबलं वदेत् ॥ ७ ॥
एकैकग्रहजा दृष्टिः पूर्णपादचतुष्टयम् ।
पञ्चमे नवमे तेषां पादोना विंशतिर्भवेत् ॥ ८ ॥
तत्र विंशोपका ज्ञेयाः सौम्यक्रूरग्रहोद्भवाः ।
एवं प्रसाध्येद्दृष्टिं युग्मभेदैः शुभाशुभम् ॥ ९ ॥
षष्टी स्तोकोनिता शेषा जायन्ते ह्यशुभाशुभाः ।
ते च विंशोपकास्तस्य स्थानस्य बलनिर्णये ॥ १० ॥
एवं देशे पुरे ग्रामे बलं यत्र शुभाधिकम् ।
तत्र स्थाने स्थितो राजा दुष्टारिष्टैर्न पीड्यते ॥ ११ ॥
स्थानबलप्रभावेण स्वबलस्य बलादयः ।
शत्रुसैन्यं क्षयं याति यावत्स्थाने शुभे स्थितः ॥ १२ ॥

इति स्थानबलचक्रम्

रुद्रयामल में कहे हुए स्थान चक्र को कह रहा हूँ जिससे प्रत्येक स्थान के शुभ अशुभ फल को जाना जाता है। स्थान के बल के प्रभाव से राजा का बल होता है। अतः विशेष बल के स्थान में राजा को सर्वदा रहना चाहिए। प्रथम स्थान के नाम से राशि बनाकर उसी को लग्न मानकर १२ राशि चक्र में क्रम से अन्य राशियों को स्थापित करे। उसमें ९ ग्रहों को यथास्थान रख के और मासिक चन्द्र को लग्न राशि में रख दे। उनके दृष्टियों को स्थान राशि पर देखे। तीसरे, ११वें एक चरण, दशम चतुर्थ में दो चरण, नवें पाँचवें में तीन चरण और सप्तम में पूर्णदृष्टि से ग्रह देखते हैं। शनि, सूर्य, राहु, केतु और भौम ये पाँच क्रूरग्रह हैं। शेष चार शुभग्रह हैं और मास चन्द्रमा भी शुभग्रह है। इस प्रकार ५ क्रूर ग्रह और ५ ही शुभग्रह हैं। इनकी शुभ अशुभ दृष्टियों को देखकर स्थानबल को कहे। एक-एक ग्रह की चार द्विपाद, त्रिपाद और पूर्णदृष्टि होती है इसके अनुसार विंशोपक होते हैं। अतः त्रिपाद में पादोन क्रम २० अर्थात् १५ विंशोपक होता है। इस प्रकार शुभ और अशुभ

के विंशोपकों को ले आकर दो २ ग्रहों की दृष्टि के अनुसार शुभ अशुभ का निर्णय करे। जो अधिक या उन शुभाशुभ दृष्टि होती है, वही उनके विंशोपक होते हैं स्थान बल ले आने के लिये। अर्थात् प्रत्येक ग्रहों की दृष्टि जातकोक्त विधि से स्पष्ट कर लेवै जो आये वही विंशोपक होता है। इस प्रकार जिस देश, ग्राम, पुर में शुभाधिक हो उस स्थान पर रहने से राजा दुष्ट अरिष्टों (दुष्टों) से पीड़ा नहीं पाता है। स्थान बल के प्रभाव से अपने बल का उदय होता है। यदि शुभ स्थान में रहे तो शत्रु सेना नष्ट हो जाती है उस स्थान के बल प्रभाव से॥ १-१२॥

इति स्थानबलचक्रम्

## अथ चन्द्रशृङ्गोन्नतिचक्रम्

मीनमेषोदये चन्द्रः सततं दक्षिणोन्नतः।
उदगुन्नतशेषे स्यात् समस्तु वृषकुम्भयोः॥ १॥
विड्वरः स्यात्समे चन्द्रे दुर्भिक्ष दक्षिणोन्नते।
ईतिरोगभयं शूले सुभिक्षं चोत्तरोन्नते॥ २॥

मीन और मेष राशि पर चन्द्रमा शुक्लपक्ष के द्वितीया तिथि को हो तो निरन्तर दक्षिण शृंग उन्नत होता है। वृष और कुम्भ राशि में चन्द्र हो तो सम शृङ्ग होता है शेष राशियों पर उत्तर उन्नत शृङ्ग होता है। समशृङ्ग होता है। समशृङ्ग चन्द्रमा का हो तो विग्रह, दक्षिण शृङ्ग उन्नत हो तो दुर्भिक्ष, त्रिशूल के आकार का शृङ्ग हो तो टिड्डी आदि और रोग का भय होता है। उत्तर शृङ्ग उन्नत हो तो सुभिक्ष होता है॥ १-२॥

नारदीयसंहितायाम्—

याम्यशृङ्गोन्नतश्चन्द्रः शुभदो मीनमेषयोः।
सौम्यशृङ्गोन्नतः श्रेष्ठो नृयुग्ममकरयोस्सदा॥ ३॥
समोक्षघटयोः कर्किचापयोः शरसन्निभः।
चापवत् कीटहर्योस्तु शूलवत् तौलिकन्ययोः॥ ४॥
विपरीतोदितश्चेन्दुर्दुर्भिक्षकलहप्रदः।
यथोक्तोऽभ्युदितश्चन्द्रः प्रतिमासं सुभिक्षकृत्॥ ५॥
आषाढद्वयमूलेन्द्रधिष्ण्यानां याम्यगः शशी।
अग्निप्रदग्धोपचरवनसर्पविनाशकृत्॥ ६॥
विशाखामैत्रयोर्याम्यपार्श्वगः पापकृच्छशी।
मध्यमः पितृदैवत्यो द्विदैवत्ते शुभात्तरे॥ ७॥

अप्राप्य पौष्णभाङ्कुक्रपड्भाणि शशी शुभः ।
मध्यगो द्वादशार्द्रायामतीत्य नवयामरान् ॥ ८ ॥
यमेन्द्राहीशतोयेशमरुत्स्वार्यतारकाः ।
ध्रुवादितिद्विदैवत्यमध्यमाश्च पराः समाः ॥ ९ ॥
याम्यशृङ्गोन्नतः श्रेष्ठः सौम्यशृङ्गोन्नतः शुभः ।
शुक्ले पिपीलिकाकारे हानिर्वृद्धिर्यथार्थकृत् ॥ १० ॥
सुभिक्षकृद्विशालेन्दुरविशालोर्धनाशनः ।
अधोमुखः शस्त्रभयं कलहो दण्डसन्निभे ॥ ११ ॥
कुजाद्यैर्निहते शृङ्गे मण्डले वा यथाक्रमात् ।
आयार्घवृष्टिनृपतिजनानां नाशकृच्छशी ॥ १२ ॥

इति शृङ्गोन्नतिचक्रम्

यदि मीन मेष राशि के चन्द्रमा हों और दक्षिण शृंग उन्नत हो तो शुभद होता है। मिथुन और मकर के चन्द्रमा में सौम्य शृंग हो तो शुभद होता है। वृष कुम्भ राशि के चन्द्र के शृंग सम, कर्क धन राशि के चन्द्र के शृंग बाण सदृश, वृश्चिक सिंह राशि के चन्द्र का धनुष और कन्या तुला राशि के चन्द्र का शूल के समान शृंग होता है। इससे विपरीत यदि चन्द्र उदय हो तो दुर्भिक्ष और कलहकारक होता है। कहे हुए अनुसार यदि चन्द्र का उदय हो तो प्रत्येक मास में सुभिक्ष ही रहता है। पूर्वाषाढ़, उत्तराषाढ़, मूल, ज्येष्ठा का चन्द्रमा याम्यमार्ग का होता है। यह अग्निबीजी, पशु, सर्प का नाश कारक होता है। विशाखा, अनुराधा का चन्द्र याम्यपार्श्व में होता है और पाप होता है। मघा का चन्द्र मध्य में और विशाखा का उत्तर में शुभ होता है। रेवती के पूर्व ६ नक्षत्र का चन्द्र शुभ, आर्द्रा को छोड़कर १२ नक्षत्र का चन्द्र नव दिन पर्यन्त मध्यम होता है। भरणी, ज्येष्ठा, श्लेषा, शत, पूर्वाषाढ़, स्वाती, अश्विनी के चन्द्रमा मध्यम। ध्रुव संज्ञक, पुनर्वसु, विशाखा के मध्यम अन्य के सम होते हैं। दक्षिण शृंग के ऊँचे और उत्तर शृंग के शुभद होते हैं। शुक्लपक्ष में चींटी के आकार के हों तो क्रम से हानि और वृद्धिकारक होते हैं। विशाल चन्द्रमा हो तो सुभिक्ष कारक और छोटा हो तो धननाश कारक होता है। अधोमुख हो तो शस्त्र का भय, दण्डाकार हो तो कलह कारक। भौमादि ग्रहों से पीड़ित शृंग वा मण्डल हो तो क्रमों से आय, अर्घ, वृष्टि, राजा आदि का नाश करने वाला चन्द्र होता है ॥ ८—१२ ॥

इति चन्द्रशृङ्ग परिचयः

एतानि सर्वचक्राणि ज्ञात्वा युद्धं समाचरेत्।
जयेदिह न सन्देहः शक्रतुल्येपि वैरिणि ॥ १ ॥

इति चक्राध्याये चतुरशीतिचक्राणि समाप्तानि।

इन सभी चक्रों को जानकर युद्ध को आरम्भ करे तो इन्द्र के समान शत्रु को भी जीत लेता है इसमें सदेह नहीं है ॥ १ ॥

इति चतुरशीतिचक्राणि

पञ्चावस्थास्वरूपं स्वरबलविमलं देहतत्त्व प्रधानं
राशौभे वेधहृद्यं ग्रहवशफलदं स्थायियायिप्रधानम्।
वर्गाद्यैश्च वर्णैर्बलविधिसहितं मातृकाभेदरम्यं
भूपादीनां जयार्थे नरपतिरकरोच्चक्रबन्धप्रबन्धम् ॥ २ ॥

इति श्रीनरपतिजयचर्यायां यामलीयस्वरोदये चक्रबन्धाख्यस्तृतीयोऽध्यायः ॥ ३ ॥



दिक्षु भ्रमति तत्काले गिरिजास्वाष्टसु तिथौ ॥ ४ ॥
रविः कुजो गुरुश्चान्द्रिः शुक्रसौरेन्दुराहवः ।
पूर्वाद्याः प्रहरार्धेन तुर्ये तुर्ये दिशि भ्रमः ॥ ५ ॥
शुक्रवारक्रमादह्नि रात्रौ व्यत्ययतो भ्रमः ।
कृष्णपक्षे गतिर्वामा जयदः पृष्ठदक्षिणे ॥ ६ ॥
यस्यैवं राहुमाप्नोति जयं विषमसङ्गरे ।
नैवात्र बलवान्कालो भूबलो नात्र योगिनी ॥ ७ ॥
गतस्य बलमाश्रित्य दुर्गभङ्गस्य वांछया ।
प्रस्थितः क्षणमात्रेण दुर्गं गृह्णाति दुर्जयम् ।
दुर्गस्था दुर्जया ये च न ते स्युः सम्मुखास्तदा ॥ ८ ॥
कालर्क्षतिथिभिर्घातो यत्र योधस्य वर्तते ।
प्रवेशं कारयेत्तत्र दिशि यस्यां शुभग्रहाः ॥ ९ ॥
दक्षपृष्ठगताः पापा क्षतदा न भवन्ति हि ।
सम्मुखं वामभागस्था भवन्ति क्षतदायकाः ॥ १० ॥
क्रूरास्तु दक्षिणे यस्य शोभना वामभागगाः ।
तदा शूरो भवेद्योधो विपरीते तु भङ्गदाः ॥ ११ ॥
स्वमित्रसमशत्रूणां गृहे पापास्तु घातदाः ।
अर्धपादोनसम्पूर्णद्विगिणं त्रितयत्रिभे ॥ १२ ॥

तिथि को १० से गुणाकर ११६ से भाग देने से वर्तमान तिथि से तात्कालिक तिथि होती है। यदि तिथि उदित हो तो अल्पलाभ, अस्तमित हो तो बहुत लाभ, आमित हो तो विजय, मध्यम काल में हानि और अस्तकाल में मरण होता है। जहाँ तात्कालिक तिथि होती है वहीं योगिनी का उदय होता है, वह योगिनी यात्रा, युद्ध और समर में वामभाग में शुभद होती है। इन्द्र, अग्नि, यम, रक्ष, वरुण, वायु, धनद, शम्भु ये आठ योगिनियों के नाम हैं जो तिथियों में भ्रमण करती हैं। सूर्य, भौम, गुरु, बुध, शुक्र, शनि, चन्द्र, राहु ये आधे आधे पहर पूर्वादि दिशाओं में अर्धप्रहर के अनुसार चौथे चौथे दिशा में भ्रमण करते हैं। शुक्रवार के क्रम से दिन में और रात्रि में उलटे घूमते हैं। कृष्णपक्ष में इनकी वामगति होती है। ये पीछे और दाहिने शुभद होते हैं। जिसे ऐसा राहु की स्थिति प्राप्त होती है वह विषम संग्राम में भी विजयी होता है। युद्ध में काल बली नहीं होता है, भूबल भी प्रधान नहीं होता है, योगिनी

का भी बल प्रधान नहीं होता है । केवल इसीके बल का सहारा लेकर किले के जीतने की इच्छा से यात्रा करने वाला क्षणमात्र में दुर्गम दुर्ग को जीत लेता है शेष स्पष्ट है ॥

चैत्रादयस्त्रिगुणिता मासास्तत्तिथिसंयुताः ।
नवभक्ताः क्रमाज्ज्ञेया शेषा यात्रा नवैव तु ॥ १३ ॥
निष्फला राक्षसी चैव साधारणी च हारिणी ।
तारणी कालयुक्ता च महाबलवती तथा ॥ १४ ॥
ऐन्द्री ऐरावती चेति क्रमात्तत्फलमुच्यते ।
निष्फला कार्यहारिणी राक्षसी व्याधिदायिनी ।
साधारणी तत्फलदा हारिणी मृत्युदायिनी ॥ १५ ॥
तारण्यां सफलं कार्यं कालयुक्ता च कालदा ।
महाबलायां लभते राज्यमैन्द्री च हानिदा ।
ऐरावती च सफला गतस्य सफला क्रिया ॥ १६ ॥

इति यात्रा

चैत्रादि मास को तिगुना कर वर्तमान तिथि को जोड़कर ९ से भाग देने से शेष नव प्रकार की यात्रा होती है, उनके नाम क्रम से निष्फला राक्षसी, साधारणी, हारिणी, तारणी, कालयुक्ता, महाबलवती, ऐंद्री, ऐरावती हैं । इसका फल निष्फला में कार्य का नाश, राक्षसी व्याधि को देने वाली, साधारणी श्रेष्ठफल को देने वाली, हारिणी मृत्यु को देने वाली, तारणी में कार्य सफल, कालयुक्त में काल की प्राप्ति । महाबला में राज्य का लाभ, ऐंद्री में हानि, ऐरावती में यात्रा करने से संपूर्ण कार्य की सिद्धि होती है ॥ १२–१६ ॥

अथ ओड्डीभूमिः

अथातः सम्प्रवक्ष्यामि भूबलानि समासतः ।
चतुर्विधेपि संग्रामे येन स्याद्विजयी नृपः ॥ १ ॥
चैत्राद्या ईशवायव्ये रक्षोग्नीन्द्रधनाधिपे ।
वारुण्यां दक्षिणे रुद्रवायुरक्षस्तथानिले ॥ २ ॥
उड्डीभूमिरियं ख्याता प्रोक्ता या ब्रह्मयामले ।
चतुर्विधेपि संग्रामे जयदा पृष्ठदक्षिणे ॥ ३ ॥

इति ओड्डीभूमिः

अथेति । अथानेकचक्रकथनानन्तरम् समासतः संक्षेपतः भूबलानि सम्प्रव

च्यामि। यत्र भूबलोऽस्मिन् चतुर्विधोऽपि हस्त्यश्वरथपदातिप्रधानोऽपि समरे विजयी न भवति। चैत्राद्या इति। इशे ऐशान्यां, वायव्ये, रक्षसि नैर्ऋत्यां, आग्नेय्यां अग्निकोणे, इन्द्रे पूर्वदिशि, धनाधिपे उत्तरदिशि, वारुण्यां पश्चिम दिशि, दक्षिणे दक्षिणदिशि, ईशान्यवायव्यनैर्ऋत्याग्निकोणे चैत्राद्याः चैत्रोपक्रम्य मासा ज्ञातव्याः। उड्डीति। सा इयं भूमिः उड्डीभूमिः प्रोक्ता कथिता। या ब्रह्मयामले ख्याता प्रसिद्धा। सा भूमिः चतुर्विधहस्त्यश्वरथपदातिप्रधान समरे पृष्ठे दक्षिणे जयदा भवति। अयमर्थः। चैत्रे मासे भूमिरैशान्यां तन्मासे युद्धप्रसङ्गे सा दिक् पृष्ठस्था वा दक्षिणभागस्था कार्या जयो भवति। एवमन्येऽपि बोध्यम् ॥ १–३ ॥

अब मैं संक्षेप से भूबल को कहूँगा। जिसको जानकर चारों प्रकार के संग्राम में विजय होती है। चैत्रादि मास क्रम से ईशान, वायव्य, नैर्ऋत्य, अग्नि, पूर्व, उत्तर, पश्चिम, दक्षिण, ईशान, वायव्य, नैर्ऋत्य, अग्निकोण में क्रम से न्यास करें। इस उड्डीभूमि कहते हैं जो कि ब्रह्मयामल में प्रसिद्ध है। चारों प्रकार के संग्राम में पीछे और दक्षिण भाग में इस करके युद्ध करने से विजय होता है। जैसे—चैत्र मास में युद्ध करना है तो भूमि का वास ईशान कोण में है अतः ईशान कोण को पीठ या दक्षिन करके युद्ध करने से विजय होती है ॥ १–३ ॥

| | | |
|---|---|---|
| चैत्र / मार्ग | श्रावण | आषाढ / फाल्गुन |
| भाद्रपद | | कार्तिक |
| वैशाख / पौष | आश्विन | माघ / ज्येष्ठ |

इति उड्डीभूमि

## अथ जालन्धरीभूमि.

वायुरुद्राग्निनैर्ऋत्ये याम्यतोयोत्तरान्तरं।
पूर्वदिशि—
अग्निरुद्रानिले रक्षे चैत्रादौ भ्रमणं भवेत् ॥ १ ॥
[illegible] मासोदयो यत्र तत्रस्था पृष्ठदक्षिणे।
इयं जालन्धरी भूमिः संग्रामे जयदा भवेत् ॥ २ ॥

इति जालन्धरी भूमिः

वायु इति। वायुः वायव्यकोणे रुद्रः ईशानकोणे, अग्निकोणे, नैर्ऋत्यकोणे, याम्यदक्षिणे तोयं पश्चिमे, उत्तरे, पूर्वदिशि अग्निकोणे रुद्रे ईशाने अनिले वायुकोणे रक्षे नैर्ऋत्यकोणे चैत्रमासमारभ्य मासानां भ्रमणं भवेत्। एवं

मिति। एवमनेन प्रकारेण यत्र पूर्वादी भागे मासोदयस्तत्र भागे पृष्ठदक्षिणे स्थिते सग्रामे जय स्यात्। इय जालधरी भूमि जालधरदेशे एकैव प्रबला जयदा ॥ १–२ ॥

वायु, ईशान, अग्नि, नैर्ऋत्य, दक्षिण, पश्चिम, उत्तर, पूर्व, अग्नि, ईशान, वायु और नैर्ऋत्य कोण में चैत्रादि महीना भ्रमण करते हैं। जहां इस प्रकार मास का भ्रमण हो उसे जालधरी भूमि कहते हैं। यह भी पीछे और दाहिने करके युद्ध करने से सग्राम में विजय को देने वाली है। यह जालधर में प्रसिद्ध हैं।

| | | |
|---|---|---|
| वैशाख / पौष | कार्तिक | ज्येष्ठ / मार्ग |
| आश्विन | | श्रावण |
| चैत्र / माघ | भाद्रपद | आषाढ / फाल्गुन |

इति जालधरी भूमि।

## अथ पूर्णा भूमिः

पूर्णाख्यां कथयिष्यामि पूर्णपीठाद्विनिर्गताम्।
द्वन्द्वयुद्धेऽथवा दुर्गे यामार्धं भुक्तिरत्र च ॥ १ ॥
पूर्वोत्तरे यमे शक्रे तोयान्तकोत्तरे जले।
यथा दिने तथा रात्रौ पृष्ठदक्षिणगो जयेत् ॥ २ ॥

इति पूर्णा भूमिः।

पूर्णपीठ से निकली हुई पूर्णानाम के भूमि को कहता हूँ जो कि द्वन्द्व युद्ध या दुर्ग युद्ध में उपयोगी है। दिन और रात में प्रहरार्ध तुल्य एक मास का भोग क्रम से पूर्व, उत्तर, पश्चिम, दक्षिण पूर्व, उत्तर, पश्चिम, दक्षिण आठों प्रहरार्धों में याम होता है। इसमें भी पीछे और दाहिने करके विजय होती है ॥ १–२ ॥

| | | |
|---|---|---|
| | पू १।५ | |
| उ २।६ | | द ४।८ |
| | प ३।७ | |

इति पूर्णा भूमि।

## अथ क्रमाख्या भूमिः

इन्द्रे यमे जले सौम्ये मेषादिभ्रमणं क्रमम्।
रविसंक्रान्तितो मासा ज्ञातव्या यत्र संस्थिताः ॥ १ ॥

तत्स्थानाक्रमणं सव्यं चतुर्नाडीदिगष्टके।
पृष्ठदक्षिणगा युद्धे कामाख्याऽरिक्षयङ्करी ॥ २ ॥

इति कामाख्या भूमिः ।

इन्द्रे इति। इन्द्रे पूर्वदिशि। यमे दक्षिणदिशि। जले पश्चिमदिशि। सौम्ये उत्तरदिशि। एवं दिक्चतुष्टये मेषादिमासमुपक्रम्य भ्रमणत्रयमावृत्तित्रयम्। तत्र स्थानचतुष्टये रविसंक्रान्तिः सूर्यराशिभोगक्रमेण मासाः संस्थिता ज्ञातव्याः। एवं कृते मेषे वैशाखे भाद्रपद-पौषमासाः पूर्वदिशि एवमग्रेऽपि शेषं स्पष्टम् ॥ १-२ ॥

मेषादि राशियों का पूर्व दक्षिण, पश्चिम, उत्तर दिशा में क्रम से तीन भ्रमण होता है। जहाँ पर जो राशि है वहाँ उस राशि का सूर्य मास जानना। जैसे मास में चैत्र, मेष में वैशाख आदि। प्रत्येक दिशा में चार चार दण्ड का भोग होता है। जैसे वैशाख, भाद्रपद और पौष मास में प्रथम चार दण्ड पूर्व दिशा में भूमि को समझना चाहिये। यह कामाख्या भूमि युद्ध में पीछे और दाहिने शत्रु को नाश करती है ॥ १-२ ॥

| | | |
|---|---|---|
| | पू<br>१।५।९ | |
| उ<br>४।८।१२ | | द<br>२।६।१० |
| | प<br>३।७।११ | |

इति कामाख्या भूमिः।

अथ कोलापुरी भूमिः

शक्रोत्तरे जले याम्ये चैत्रादौ भ्रमणत्रयम्।
मासोदयगता गम्य तस्माद् घटिका क्रमात् ॥ १ ॥
तत्राष्टनाडिकाभुक्तिरुदयम्य पुनः पुनः।
इयं कोलापुरी भूमिः पृष्ठदक्षिणगा शुभा ॥ २ ॥

इति कोलापुरी भूमिः ।

शक्रोत्तरे इति। शक्रे पूर्वदिशि। उत्तरदिशि। जले पश्चिमदिशि। याम्ये दक्षिणदिशि। चैत्रादौ मासे क्रमेण भ्रमणत्रयम् भवति। यथा—चैत्र माघ

मार्गशीर्षाणा पूर्वस्या दिश्युदय । तत्र यस्या दिशि यस्य मासस्योदयस्तस्मात् स्थानात् घटिकाक्रमेण उदय । अन्यत्स्पष्टम् ॥ १–२ ॥

चैत्रादि मासों का क्रम से पूर्व, उत्तर, पश्चिम और दक्षिण में तीन आवृत्ति उदय होता है। जो मास जहां उदित हो वहां से क्रम से घटिका, क्रम से उदित होते हैं। एक मास का एक दिशा में ८ घटी उदय फिर दूसरे ८ घटी में दूसरे दिशा म इस प्रकार से उदय समझना चाहिये। यह कोलापुरी भूमि है जो कि पीछे और दाहिने विजय को देती है ॥ १–२ ॥

| | | |
|---|---|---|
| | चै श्रा मार्ग | |
| वै भाद्र पौ. | | आषा का फा |
| | ज्ये आश्वि मा | |

इति कोलापुरीभूमि ।

## अथ एकवीरा भूमिः

रुद्रे जलाग्नि-सौम्ये च नैर्ऋत्येन्द्रानिले यमे ।
ईशेऽम्बुपावके सौम्ये चैत्रादिभ्रमणं भवेत् ॥ १ ॥
एकवीरा महाभूमिः प्रोक्ता या चादियामिले ।
पृष्ठदक्षिणगा युद्धे जयदा नात्र संशयः ॥ २ ॥

इति एकवीरा भूमिः ।

रुद्रे इति । रुद्रे ऐशान्याम् । जले पश्चिमदिशि । अग्नौ आग्नेय्याम् । सौम्ये उत्तरदिशि । नैर्ऋत्या राक्षसे । इन्द्रे, पूर्वदिशि । अनिले वायव्या । यमे दक्षिणस्याम् । ईशे ईशान्याम् । अम्बु पश्चिमायाम् । पावके आग्नेय्याम् सौम्ये उत्तरदिशि । चैत्रादि चैत्रमासानामादिभूतमासाना भ्रमण भवेत् । शेष स्पष्टम् ॥ २ ॥

चैत्रादि मासक्रम से ईशान, पश्चिम, अग्नि, उत्तर, नैऋत्य, पूर्व, वायव्य, दक्षिण, ईशान, पश्चिम, अग्नि और उत्तर दिशा में भ्रमण करते हैं। इसे एकवीरा भूमि कहते हैं जो कि आदियामल में कही हुई है। युद्ध में पीछे और दाहिने विजय को देती है ॥२॥

| | | |
|---|---|---|
| चै मार्ग | भाद्र | ज्ये मा |
| आषा फाल्गु | | का |
| आश्वि | वैशा मा | श्रा |

इति एकवीरा भूमि ।

### अथ शिलिन्ध्रा भूमिः

चैत्रादि-पूर्वतो वामं भ्रमन् काष्ठाचतुष्टये।
शिलिन्ध्राख्या महाभूमिर्जयदा पृष्ठदक्षिणे ॥ १ ॥
बुधश्च मङ्गलः सौरिर्विधुर्गुरुरिति क्रमात्।
सर्वे ग्रहा एवमेव रविशुक्रौ च पश्चिमे ॥ २ ॥

इति यामले शिलिन्ध्रा भूमिः।

पूर्वदिशा से क्रम से वाम क्रम से चारों दिशा में चैत्रादि मासों का भ्रमण होता है। इसे शिलिंध्राभूमि कहते हैं। यह पीछे और दाहिने जयप्रद होती है ॥ १ ॥

| | | |
|---|---|---|
| | चै वै मार्ग | |
| वै भा पौ | | आ का फा |
| | ज्ये आश्वि मा | |

इति शिलिन्ध्रा भूमि।

### अथ महामारी भूमिः

चक्रे द्वादशपत्राख्ये मेषाद्या वाममार्गतः।
यत्रस्थोऽर्कस्ततः सव्ये भुक्तिः सार्द्धघटीद्वयम् ॥ १ ॥
महामारी समाख्याता भूबलानां बलोत्कटा।
समरे जयदा प्रोक्ता पृष्ठदक्षिणसंस्थिता ॥ २ ॥

इति महामारी भूमिः।

द्वादशचक्र में मेषादि राशियों को वाम मार्ग से रखना चाहिये। जहां सूर्य हो वहां २½ ढाई घटी के अनुसार एक एक राशि के भोग की कल्पना करे ॥१॥ यह महामारी भूमि कही जाती है जो कि भूबलों में उत्कट बल को देनेवाली है और समर में पीछे दाहिने विजय को देती है ॥ २ ॥

| | | |
|---|---|---|
| वृ ५० / मि २७॥ | मे २॥ | मी ५ / कु ७॥ |
| क २५ | | म १० |
| सि २२॥ / २० का | तु १७॥ | ध १२॥ / वृ १५ |

इति महामारी भूमि।

अथ क्षेत्रपाली भूमिः

विलोमाः पूर्वतो मासाश्चैत्राद्या दिक्चतुष्टये।
प्रहराः सव्यमार्गेण मासस्थानाद्धि गण्यते ॥ १ ॥
चातुरङ्गे कवौ कोटे जयदा पृष्ठदक्षिणे।
क्षेत्रपाली महाभूमिर्भूवलानां बलोत्तमा ॥ २ ॥
यद्बलाद्बलयुक्तानि भूवलान्यपराणि हि।
एतद्बलेन रहिता वृथा चतुरशीतयः ॥ ३ ॥

इति क्षेत्रपाली भूमिः।

विलोमा इति। पूर्वदिशमारभ्य विलोमाद्वैपरीत्येन वामावर्त्तेन दिक्चतुष्टये पूर्वोत्तरपश्चिमदक्षिणसञ्ज्ञके चैत्रमासादेदिक्चतुष्टये क्षेत्रपालीभूमेर्भ्रमणत्रयं भवति मास तत्रैव तिष्ठति। तत्र मासस्थानात् दिवा स स्थानमुपक्रम्य प्रहरो दिनचतुर्थभाग चतु सव्यमार्गेण प्रदक्षिणक्रमेण उदयति। यथा चैत्र उदये प्रहरं यावत् मासस्थाने पूर्वे तिष्ठति। तदुपरि द्वितीयप्रहरे दक्षिणस्या तिष्ठति। एव सर्वत्र। अन्यत्स्पष्टम् ॥ २-३ ॥

चारों दिशाओं में दिशा क विलोम रीति से चैत्रादि मासों को स्थापित करना। एक एक प्रहर वाम मार्ग से इनकी स्थिति होती है ॥ १ ॥ चातुरग युद्ध में, कवियुद्ध में, कोट युद्ध में पीछे और दाहिने विजय देनेवाली होती है ॥ २ ॥ जिसके बल से अन्य भूबल बली होते हैं। इसके बल से हीन ८४ बल वृथा होते हैं ॥ ३ ॥

| | | |
|---|---|---|
| | ११५ चै था मार्ग | |
| आ का फा ४१८ | | पं मा पौ २१९ |
| | उये आ मा ७१२ | |

इति क्षेत्रपालीभूमि।

अथ वंशजा भूमिः

पावके सौम्यनैर्ऋत्य इन्द्रवायुयमे हरे।
जलाग्न्युत्तरनैर्ऋत्ये पूर्वे चैत्रादिमासतः ॥ १ ॥
वंशजेयं महाभूमिर्दैत्यवंशजयङ्करी।
दक्षपृष्ठगता युद्धे जयदा नात्र संशयः ॥ २ ॥

इति स्वरोदये वंशजा भूमिः।

| | | |
|---|---|---|
| अग्नि | आषा फा | चै मार्ग |
| वै पौ | | भाद्र |
| श्रा | का | ज्ये मा |

चैत्रादि मासों में क्रम से अग्नि उत्तर, नैर्ऋत्य, पूर्व, वायव्य, दक्षिण, ईशान, पश्चिम, अग्नि, उत्तर, नैर्ऋत्य और पूर्व में वज्राभूमि वास करती है ॥१॥ यह भूमि एकवीरा के ही समान है। अर्थात् इस भूमि में दोनों का बल प्राप्त होता है। जैसे चैत्र मास में वज्रा अग्निकोण में और एकवीरा ईशान कोण में, यहां यदि वज्रा को पीछे करें तो एकवीरा दाहिने होगी इसलिये दोनों का बल प्राप्त होगा। इसी प्रकार अन्यत्र भी समझना। यह वज्रा भूमि दैत्यवश को विजय करने वाली है। किन्तु दाहिने पीछे हो तो ॥ २ ॥

इति वज्रा भूमि ।

## अथ रुद्रभूमिः

दानवानां वधार्थाय रुद्रो रुद्रेण चिन्तितः ।
तं रुद्रं च प्रवक्ष्यामि जयाय विजयार्थिनानाम् ॥ १ ॥
दशदोर्दण्डपञ्चास्यं त्रिनेत्रं च जटाधरम् ।
महाप्रेतासनारूढ त्रिशूलायुधधारिणम् ॥ २ ॥
ऐन्द्रे वायौ यमे रुद्रे वारुणेग्नीन्दुराक्षसे ।
प्राच्यन्तके जले सौम्ये चैत्रमासादयं क्रमः ॥ ३ ॥
दिनं दिनार्धयामं च प्रहरार्धं तथाग्रतः ।
एवं भुक्तिप्रमाणेन पृष्ठदक्षिणगो जयी ॥ ४ ॥

इति स्वरोदये रुद्रभूमिः ।

दानवानामिति। स्पष्टम्। दिनमिति। दिन दिनार्धयाम प्रहरार्धं चेति भुक्तिचतुष्टयम्। तत्र दिने मासस्थाने दिनान्ते रात्रौ द्वितीयदिशि याति। पुनर्दिनार्धं तत्रैव तिष्ठति। अपराह्ने द्वितीयदिशि याति। पुन पूर्वरात्रौ तृतीय दिशि याति। अर्धरात्रोपरि चतुर्थदिशि याति। एव दिन दिनार्धं व्याख्यातम्। स एव रुद्रो मासोदयस्थानात् प्रहरे प्रहरं यावत्तत्रैव तिष्ठति। द्वितीयप्रहरे द्वितीयदिशि याति। तृतीयप्रहरे तृतीया दिशम्। चतुर्थप्रहरेण चतुर्थी दिशमित्यष्टदिशोऽष्टप्रहरेण भुङ्क्ते। यामार्धमिति मासोदयस्थानात् प्रहरार्धं

स्थित्वा, द्वितीयप्रहरार्धे द्वितीया दिशं याति पतति। तृतीयप्रहरार्धेन तृतीया दिशमित्यादिक्रमेण षोडशभिरर्धप्रहरैर्मासस्थानाच्चतुश्चतु कृत्वा दिशि परिभ्रमति अत' उक्त याम प्रहरार्धं च। अन्यत्स्पष्टम्॥ १–४॥

| आपा | चै मार्ग | भाद्र |
|---|---|---|
| आ फा | - | ज्ये पौ |
| वै पौ | आ मा | का |

युद्ध में महादेव जी दानवों के वध के निमित्त जिस रुद्र की चिंता की थी, मैं उस रुद्र को विजयेच्छु जनों के विजय के लिये कह रहा हूँ दश भुजाओं से युक्त, पाँचमुख, तीन नेत्र, महाप्रेतवाहन पर बैठे, त्रिशूल आयुध को लिये शंकर जी ने चिंता की थी। पूर्व, वायु, दक्षिण, ईशान, पश्चिम, अग्नि, नैर्ऋत्य, पूर्व, दक्षिण, उत्तर इस क्रम से चैत्रादि मासों में भूमि का वास होता है। दिन, दिनार्ध, प्रहर, प्रहरार्ध भुक्ति के अनुसार आगे-आगे चलती है। जैसे जहाँ मास की स्थिति है वहाँ से रात्रि में दूसरे दिशा में दिनार्ध तक वहीं रहती है फिर अपराह्न में दूसरे दिशा में जाती है। फिर पूर्व रात्रि में तीसरे दिशा में फिर अर्धरात्रि से चौथे दिशा में जाती है। पुन: मासोदय स्थान से १ प्रहर तक उसी दिशा में, दूसरे प्रहर में दूसरे दिशा में, तीसरे में तीसरी दिशा और चौथे में चौथी दिशा में इस प्रकार आठ प्रहर में घूमती है। पुनः मासोदय स्थान में प्रहरार्ध दूसरे प्रहरार्ध में दूसरे दिशा में इत्यादि क्रम से घूमती है अर्थात् १६ प्रहरार्धों में क्रम से एक-एक दिशा में चार चार बार घूमती है। इस प्रकार भुक्ति के अनुसार भूमि को पीछे और दाहिने करके युद्ध करने से विजय होती है॥ १–४॥

इति रुद्रभूमि।

## अथ कालानली भूमिः

सप्तरेखाङ्किते चक्रे रुद्रादौ मासभादितः।
सव्यमार्गेण भ दत्त्वा चाष्टाविंशतिसंख्यया॥ १॥
मासर्क्षाद्दिनभं ज्ञात्वा तस्मात्तात्कालिकं च भम्।
रेखायामुदयाद् भुक्तिः सपादघटिकाद्वयम्॥ २॥
मासर्क्षं मासनामर्क्षं दिने दुर्दिनभं तथा।
नाडिकाभ्रमणाद्यत्र तत्र तत्कालसंज्ञकः॥ ३॥
मासेन्दोर्मासभानु' स्याद्दिनेन्दोर्दिनभास्करः।
घटिकेन्दोर्घटीभानुस्त्रिपञ्चर्क्षे सदा भवेत्॥ ४॥

